TRIVANDRUM SANSKRIT SERIES.

NO. XXVII.

THE

# KUMÂRASAMBHAVA

OF

# KÂLIDÂSA

With the two commentaries, PRAKÂSIKÂ of

**ARUṆAGIRINÂTHA**

and VIVARAṆA of

**NÂRÂYAṆAPAṆḌITA**

EDITED BY

**T. GAṆAPATI SÂSTRÎ**

*Curator of the Department for the publication of Sanskrit manuscripts,*

TRIVANDRUM.

**Part I.—1 & 2 Sargas.**

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJAH OF TRAVANCORE.

TRIVANDRUM:

PRINTED AT THE TRAVANCORE GOVERNMENT PRESS.

1913.

अनन्तशयनसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः २७.

# कुमारसम्भवः

## महाकविश्रीकालिदासप्रणीतः

श्रीमदरुणगिरिनाथविरचितया कुमारसम्भवप्रकाशिकया

नारायणपण्डितविरचितेन कुमारसम्भवविवरणेन च

समेतः

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण

त. गणपतिशास्त्रिणा

संशोधितः ।

प्रथमः सम्पुटः—१. २. सर्गौ ।

स च

अनन्तशयने

महामहिमश्रीमूलकरामवर्मकुलशेखरमहाराजशासनेन

राजकीयमुद्रणयन्त्रालये

मुद्रयित्वा प्रकाशितः ।

कोल्लम्बाब्दाः १०८८, क्रैस्ताब्दाः १९१३.

# PREFACE.

Prakâsikâ and Vivarana are the two commentaries on Kâlidâsâ's Kumârasambhava. The former of these was written by Arunâchalanâtha who, at the beginning of Prakâsikâ, observes,

> "वर्ण्यते शिवयोर्वृत्तं कालिदासस्य सूक्तयः ।
> व्याख्यातारो वयं चेति मन्ये कोऽप्युत्सवः सताम् ॥"

and implies by 'व्याख्यातारो वयं च' that his commentary is, on account of its pre-eminent merits, best suited to the acknowledged excellence of the text and the divine character of the subject-matter. This is certainly a statement of fact, and by no means a piece of vanity on the part of the commentator. He has also written a commentary of equal merit on Raghuvamsa, which along with the text will be included in the Trivandrum Sanskrit Series before long. Arunâchalanâtha quotes* in his commentary, as an authority, Kesavaswâmin, the author of Nânârthârnavasamkshepa who lived in the 12th century A. D. Mallinâtha, the famous commentator of Mahâkâvyas who is taken to have flourished about the end of the 14th century A.D. refers† to Arunâchalanâtha, in his commentary on Raghuvamsa. It is therefore probable that our commentator might have flourished between the 12th and 14th centuries.

The other commentary Vivarana closely follows Prakâsikâ in almost all details and is indeed an explanatory paraphrase

---

* "त्रिष्वन्यत्रोपयुक्ततः इति केशवस्वामिवचनादुपयुक्तादन्यदभिधानस्य शेषशब्दस्य विशेष्यलिङ्गत्वमवसेयम्" vide sarga 1, sloka 16.

† "नाथस्तु चतुर्विधं वृद्धत्वमिति ज्ञात्वा अनाकृष्टस्य इत्यादिना विशेषणत्रयेण ज्ञानशीलवृद्धत्वान्युक्तानीत्यवोचत्" vide sarga 1 sloka 23.

तेरागयज्ञा

of the latter, for it becomes intelligible, in many places, with the help of Vivarana. The author of Vivarana is Nârâyana Pandita of whom mention has already been made in the preface of Mânameyodaya. He has also written a commentary on Raghuvamsa, called Padârthadîpikâ.

The edition of Prakâsikâ is based on the following five manuscripts.

1. (क)—A transcript in Devanagari character kindly sent to me by Srimân Punnasseri Nîlakaṇṭha Sarma, editor of Vijṇânachintâmaṇi and made from his old manuscript.
2. (ख)—Lent by Mr. Kesavan Nambiyatiri, Njarakkal, Perumad.
3. 4. (ग) (घ)—Belonging to Panthalam Palace.
5. (ङ)—Belonging to Brahmasri Kumâraswâmi Namburipad of Chennassumanakkal.

The edition of Vivarana is based on the following five manuscripts.

1. (क)—Obtained from Manalikkara Maṭham.
2. (ख)—Belonging to Mr. Kesavan Nambiyatiri, Njarakkal, Perumad.
3. (ग)—Belonging to Panthalam Palace, incomplete.
4. (घ)—Lent by Mr. Iravi Ayyappan, Panthalam, incomplete.
5. (ङ)—Lent by Mr. Kesava Kaiinal, Thottakam, incomplete.

All the above manuscripts are written in Malayâlam character on palm leaves.

The first two sargâs of Kumârasambhava along with the corresponding portions of the two commentaries are now offered to the public as the first part. The remaining parts will be published in due course.

udrum. T. GANAPATI SÂSTRÎ.

# निवेदना ।

**कुमारसम्भवस्य** **प्रकाशिकेति** **विवरणमिति** च व्याख्याद्वयेऽस्मिन् **प्रकाशिकायाः** कर्ता श्रीमान् **अरुणगिरिनाथः** । स ग्रन्थोपक्रमे

"वर्ण्यते शिवयोर्वृत्तं कालिदासस्य सूक्तयः ।
व्याख्यातारो वयं चेति मन्ये कोऽप्युत्सवः सताम् ॥"

इत्याह । अत्र प्रतिपाद्यप्रतिपादकयोर्यल्लोकविदितं महत्त्वं सहृदयहृदयग्राहि, तदनुरूप आत्मीयव्याख्याया व्याख्यान्तरागोचरो महिमेति 'व्याख्यातारो वयं चेति' इत्यंशेन व्याख्याता द्योतयति । तदेतत् प्रतिपत्तृप्ररोचनाङ्गं ग्रन्थगताया गुणसम्पदस्तत्त्वाख्यानमात्रं, न पुन**ररुणगिरिनाथ**स्यात्मश्लाघावाक्यम् । अनया व्याख्यया सदृशी **रघुवंशस्यापि** काचिद् व्याख्या श्रीम**दरुणाचलनाथेन** प्रणीतास्ति, याम् अस्यां संस्कृतग्रन्थावलावचिराद् ग्रथयितुमभिलषामः । **अरुणाचलनाथो**† **नानार्थार्णवसंक्षेप**-कर्तारं क्रैस्ताब्दद्वादशशतकस्थित **केशवस्वामिनं** प्रमाणयंस्तदपेक्षयार्वाचीनः । **रघुवंश**व्याख्यात्रा क्रैस्ताब्दचतुर्दशशतकस्थितेन **मल्लिनाथेन**‡ तु स्मर्यमाणोऽसौ तदपेक्षया प्राचीनः ।

**विवरणं** तु **प्रकाशिका**नुसारि तस्याश्छायाव्याख्यानप्रायम् । अतिप्रौढा हि **प्रकाशिका** बहुत्र **विवरण**बलेन सुगमार्था लक्ष्यते । **विवरणस्य** कर्ता **नारायणपण्डितस्तु** **मानमेयोदयस्य** निवेदनायां वर्णितः । **पदार्थदीपिका** नाम **रघुवंशस्य** व्याख्याप्यनेन प्रणीतास्ति ।

**प्रकाशिकायाः** संशोधनाधारभूता आदर्शग्रन्थास्तावत् पञ्च । तत्र

क. संज्ञः विज्ञानचिन्तामणिपत्राधिपेन श्रीमता पुन्नश्शेरि—**नीलकण्ठशर्म**महाशयेन मातृकान्तराद् देवनागराक्षरैर्लेखयित्वा सकृपं प्रेषितोऽष्टमसर्गान्तः ।

---

† 'त्रिष्वन्यत्रोपयुक्तत इति केशवस्वामिवचनादुपयुक्तादन्यदभिदधानस्य शेषशब्दस्य विशेष्यलिङ्गत्वमवसेयम् ।' (स. १. श्लो. १६)

‡ 'नाथस्तु चतुर्विधं वृद्धत्वमिति ज्ञात्वा अनाकृष्टस्य इत्यादिना विशेषणत्रयेण वैराग्यज्ञानशीलवृद्धत्वान्युक्तानीत्यवोचत् ।' (स. १. श्लो. २३)

ख. संज्ञः पेरुनाट्ट आरक्कल् श्रीकेशवनम्बियातिरिसकाशादानीतः ।

ग. घ. संज्ञौ श्रीपन्तलराजसम्बन्धिनौ ।

ङ. चिह्नितः (चेन्नम् मनक्कल्) श्रीकुमारस्वामिनम्पूतिरिमहाशयस्वामिकः ।

विवरणसंशोधनस्याधारादर्शास्तु एते भवन्ति—

क. संज्ञो मणलिक्करमठीयः ।

ख. संज्ञः पेरुनाट्ट श्रीकेशवनम्बियातिरीयः सप्तमसर्गावधिकः ।

ग. संज्ञः पन्तलराजसम्बन्धी पञ्चमसर्गैकदेशान्तः ।

घ. संज्ञः पन्तल इरवि अय्यप्पसकाशाल्लब्धः षष्ठसर्गैकदेशान्तः ।

ङ. चिह्नितः तोट्टक केशवकैम्मल्सम्बन्धी सप्तमसर्गैकदेशावधिकः ।

सर्वे एते तालपत्रात्मकाः केरलीयलिपयः ।

एतद्व्याख्यानरत्नद्वयसंवलितस्य कुमारसम्भवस्य प्रथमो भागः प्रथमद्वितीयसर्गात्मक एष इदानीं प्रकाश्यते; क्रमेण तु भागान्तराणि प्रकाशयिष्यन्ते ।

अनन्तशयनम्. त. गणपतिशास्त्री.

॥ श्रीः ॥

महाकविश्रीकालिदासप्रणीतः

# कुमारसम्भवः

श्रीमदरुणगिरिनाथविरचितया कुमारसम्भवप्रकाशिकया

श्रीनारायणविरचितेन कुमारसम्भवविवरणेन च

समेतः ।

---

## प्रथमः सर्गः ।

अस्त्युत्तरस्यां दिशि देवतात्मा
हिमालयो नाम नगाधिराजः ।
पूर्वापरौ ‡वारिनिधी विगाह्य
स्थितः पृथिव्या इव मानदण्डः ॥ १ ॥

(प्रकाशिका)

समस्तागमसंवेद्यं समस्तागमकारणम् ।
शरण्यं सर्वलोकानां प्रपद्येऽहं कपर्दिनम् ॥

यः काव्ये पदवाक्यशक्त्यवगमो योऽलङ्क्रियास्वागमो
या नानाविधवेद्यवस्तुविषये प्राप्तप्रतिष्ठा मतिः ।
यश्चायं रसभावमेलनगुणप्राधान्यबोधोदय-
स्तत् सर्वं भवपादपङ्कजरजःसम्पर्कजं मन्महे ॥

रघुवंशे महाकाव्ये विमृश्य रससम्पदम् ।
कालिदासकवीन्द्रस्य ज्ञातास्वादेन सूक्तिषु ॥

---

‡ 'तोयनिधी वगा' मुद्रितकोशपाठः.

अरुणाचलनाथेन द्विजपादाब्जसेविना[1] ।
कुमारसम्भवाख्येऽपि मया टीका वितन्यते ॥
वर्ण्यते शिवयोर्वृत्तं कालिदासस्य सूक्तयः ।
व्याख्यातारो वयं चेति मन्ये कोऽप्युत्सवः सताम् ॥

तत्र कविरादौ वस्तुनिर्देशं करोति--

**अस्तीति । उत्तरस्यां दिशीति हिमवतो देवभूम्यन्तर्भाव उक्तः । वक्ष्यति च 'पितुः प्रदेशास्तव देवभूमयः' (५. ४५) इति । देवतात्मा, न केवलं स्थावरात्मा । इदं तु वक्ष्यमाणचेतनकृत्यविवाहादिघटनार्थम् । नाम प्रसिद्धौ । पूर्वेत्यादि मानदण्डोत्प्रेक्षाङ्गम् । मानं परिच्छेदस्तदर्थो दण्डो मानदण्डः । अन्ये तु पृथिवीमतिव्याप्य स्थितत्वात् तस्याः पृथुत्वाभिमानदम इवेति व्याचक्षते । न त्वेतत् सरसकाव्ययोजनासु युज्यते । ननु कोऽयं वस्तुनिर्देशो नाम । उच्यते । वस्त्वितिवृत्तम् । तत्र च प्राधान्याद्[2] वस्तुशब्देनात्र नायक उच्यते । तस्य प्रधानस्येतरस्य वा निर्देशो वस्तुनिर्देशः । अत्र च घंघणेन 'श्रियः पतिः' इत्युदाहृतं, भोजेन तु हयग्रीववधे 'आसीद् दैत्यो हयग्रीवः' इत्यादि । हिमवांश्चात्र प्रबन्धे पताकानायकः[3] । ननु वस्तुनिर्देशैकोपक्रमेषु काव्येषु [illegible] मङ्गलाचारः कविभिर्नादृतः स्यात् । न । तत्रापि तैः परमेश्वरनमस्कारो मानसः क्रियते । वाचिकस्तु कैश्चिच्चरितार्थम्मन्यतयोपेक्ष्यते, कैश्चित्तु व्याख्यातृश्रोतृजनानुग्रहाय प्रयुज्यते । इह तु हिमवत्कीर्तनान्मङ्गलमप्याचरितमेव ॥ १ ॥**

**(विवरणम्)**

षट्पदमुखरितगण्डं कोटीरभरावबद्धशशिखण्डम् ।
प्रणमत वारणतुण्डं पदकमलप्रणतसकलसुरषण्डम् ॥
अपारकरुणापूरतरङ्गितदृगञ्चलम् ।
कलायकोमलच्छायं जानकीनायकं भजे ॥
सुराराते्र्वक्षःकुहररुधिरक्षोदकपिशैः
स्वतः श्वेतैः सन्ध्याकपिशशशिखण्डांशुसदृशैः ।

१. 'शाङ्गिना' ख. पाठः. २. 'प्रधानत्वाद्' ख. पाठः. ३. 'कावृत्तना' ख, पाठः.
४. 'पु शि' क. पाठः. ५. 'तृज' ख. पाठः.

मलोद्द्योतैर्भक्तप्रकरहृदयध्वान्तभिदुरा
दया काचिद् दिव्या विलसति पुरश्रेणिविपिने ॥

लोकानामुदयस्थितिक्षतिकरी वन्दारुवृन्दारक-
श्रेणीमौलिमणिप्रभारविकरप्रोद्यत्पदाम्भोरुहा ।
भाति ब्रह्मखलालये शशिकलाशुम्भज्जटावल्लरी
भक्ताभीष्टविधानकल्पलतिका काचित् कृपावल्लरी ॥

अङ्गे तुङ्गशशाङ्कशङ्खधवलं कोटीरभारे परे
बालादित्यकराङ्कुरप्रतिभटं कण्ठे घनश्यामलम् ।
सत्त्वादीनपि बिभ्रतं त्रिजगतां रक्षादिसिद्ध्यै गुणा-
नाबद्धाञ्जलि बालमन्दनिलयं मारारिमाराधये ॥

कृष्णो विबुधाधिपतिर्निष्णातो विमरणेषु विद्यायाः ।
मुष्णातु हृदयतिमिरं पुष्णातु च मङ्गलानि सकलानि ॥

प्राचीनाचार्यकृताः सुविचार्य कुमारसम्भवव्याख्याः ।
बालप्रबोधनार्थं ललितं करवाणि विवरणं तस्य ॥

प्राचीनसूरिविहिते महति प्रभूते
व्याख्यान्तरे विफल एष परिश्रमो मे ।
वाति प्रकामसुभगे मलयाद्रिजाते
वाते फलं किमु करोति[1] सुखानिलोऽयम् ॥

व्याख्यैषा तु तथापि प्रदर्शितान्वयपदार्थवाक्यार्था ।
विवृतसमासा पठतां गुरुतरमुपकारमारचयेत् ॥

व्याख्यान्तरेषु दृष्टेषु विसृष्टेष्वपि तत्त्वतः ।
सुभगः शिवदासोक्तो मार्ग एवानुगम्यते ॥

इह खलु महाकविः कालिदासः पार्वतीपरमेश्वरयोश्चरित्रविचित्रं कुमारसम्भवाभिधानं काव्यं चिकीर्षुः 'आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्' इति[2] वचनानुसारेण वस्तुनिर्देशं तावत् करोति—

अस्तीति । ननु काव्ये यत् साध्यं तदनुसारेणैव काव्यसंज्ञा कर्तव्या, यथा युधिष्ठिरविजयजानकीहरणशिशुपालवधप्रभृतीनाम् । अत्र तु तारकासुरनिग्रहः काव्ये साध्यतया निर्दिष्टः, 'तस्मिन् विप्रकृताः काले तारकेण दिवौकसः' (२. १) इत्युपक्रमात् । तस्मात् तारकवध इत्येव संज्ञा

---

१. 'तु' ख. पाठः.   २. 'त्यादिव' ख. पाठः.

कर्तव्या। तत्पर्यन्तं च काव्यं प्रवर्तयितव्यम्। नचैतत् कृतम्। तस्माद-समञ्जसमिदं काव्यम्। अपिच कुमारोत्पत्तिपर्यन्तमपि न काव्यं कृतम्। तस्मादनुपपन्नमिदं नामापीति। अत्रोच्यते। नात्र तारकासुरनिग्रहः काव्ये साध्यः। 'तदिच्छामो विभो! स्रष्टुं सेनान्यं तस्य शान्तये' (२. ५१) इति दैवैः कुमारसृष्टिमात्रस्यैव ब्रह्माणं प्रति प्रार्थितत्वात्। तारकासुरनि-ग्रहस्तु कुमारोद्भवप्रस्तावकतया निमित्तत्वेनोपक्षिप्तः, यथा किरातार्जुनीये दुर्योधनजयः। तस्मात् कुमारसम्भव इत्येव संज्ञा युक्ता। नचैवंसति तत्पर्यन्तं काव्यं प्रवर्तयितव्यमिति वाच्यम्।

"उमारूपेण ते यूयं संयमस्तिमितं मनः।
शंभोर्यतध्वमाक्रष्टुमयस्कान्तेन लोहवत्॥" (२. ५९)

इति ब्रह्मणः प्रतिवचनेन शंभोश्चित्ताकर्षणमात्रस्यैव परमसाध्यत्वेन प्रतिपादनात्। कारणपौष्कल्ये कार्यस्यावश्यम्भाव एव ब्रह्मणस्तथा निर्देशे हेतुरिति चावग-न्तव्यम्। शंभोश्चित्ताकर्षणं पुनरष्टमे सर्गे विस्तरतः प्रतिपादितम्। यथो-क्तमन्त्यश्लोके—

"समदिवसनिशीथं सङ्गिनस्तत्र शंभोः
शतमगमदृतूनां सार्धमेका निशेव।
स न सुरतरसेषुच्छिन्नतृष्णो बभूव
ज्वलन इव समुद्रान्तर्गतस्तज्जलेषु॥"

इति। उक्तं च पञ्चमसर्गान्ते देवीं प्रति देवेनैव 'अद्यप्रभृत्यनवमाङ्गि! तवास्मि दासः क्रीतस्तपोभिरि'ति। तस्मादुमारूपेणेत्युपक्रमाद् अद्यप्रभृतीति परामर्शात् समदिवसनिशीथमित्युपसंहाराच्च शंभोश्चित्ताकर्षणमात्र एव ता-त्पर्यम्,

"उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये॥"

इति वचनात्। तच्च सम्यक् प्रतिपादितम्। अष्टमसर्गे सम्भोगवर्णनेन कुमारोत्पत्तेर्बिन्दूपक्षेपोऽपि कृत इति सर्वमनवद्यम्। यत्त्वत्र तारकासुर-

निग्रहपर्यन्तं चिकीर्षितमिदं काव्यं निजसम्भोगवर्णनेन[1] कुपिताया देव्याः शापादसंपूर्णं जनितमिति कैश्चिदुक्तं, तदप्युक्तया रीत्या परिहृतं वेदितव्यम्। कवेश्चिकीर्षाया एतत्पर्यन्तत्वस्य समर्थितत्वात्। देव्याः शापाभावं पुनरष्टमसर्गादौ निपुणमुपपादयिष्यामः। ननु कुमारसंभव इत्यत्र कः समासः। षष्ठीतत्पुरुष इति ब्रूमः। नचैवंसति कुमारसंभवरूपार्थपरत्वाच्छब्दस्य कुमारसंभवः काव्यमिति सामानाधिकरण्यं न स्यादिति वाच्यम्। अभिधेयेनाभिधायकस्यापि बहुशो व्यपदेशदर्शनात्। यथा जानकीहरणं प्रबन्धः शिशुपालवधः काव्यमित्यादिष्वित्यलमतिप्रसङ्गेन। प्रकृतमेवानुसरामः। उत्तरस्यां दिशि हिमालयः नाम नगाधिराजः अस्ति। उत्तरस्यां दिशीत्यनेन हिमवतो देवभूमिष्वन्तर्भाव उक्तः। वक्ष्यति च 'पितुः प्रदेशास्तव देवभूमयः' (५. ४५) इति। उत्तरस्यां दिशि देवभूमयः, दक्षिणस्यां दिश्यसुरभूमयः, मध्ये मनुष्यभूमय इति पुराणप्रसिद्धिः। हिमानां तुषाराणामालयो हिमालयः। नामेति प्रसिद्धिवाचकमव्ययम्। हिमवानिति प्रसिद्ध इत्यर्थः। नगानां पर्वतानामधिराजो नगाधिराजः। अधिराजः श्रेष्ठः। अस्ति भवति। अत्रास्तीति वर्तमाननिर्देशेन परमेश्वरश्वशुरस्यास्य नित्यत्वमुक्तम्। आसीदुदीच्यां दिशीत्यादिरीत्या विनाशसहधर्मचारिण्या उत्पत्तेरनुपादानात्। वक्ष्यमाणानां चेतनेष्वेवोपपन्नानां विवाहपुत्रोत्पादनादिधर्माणाम् उत्पत्तिं दर्शयन् नगाधिराजं विशिनष्टि—देवतात्मेति। देवतास्वरूपः न केवलं स्थावरात्मेत्यर्थः। हिमवत आयामविस्तारादिकं दर्शयति—पूर्वापरौ वारिनिधी विगाह्य स्थितः। पूर्वमपरं च पूर्वापरौ प्राच्यपश्चिमौ वारिनिधी समुद्रौ विगाह्य सम्प्राप्य स्थितः अवस्थितः। अत एवोत्प्रेक्षते—पृथिव्या मानदण्ड इवेति। पृथिव्या भूमेः मानाय परिच्छेदाय दण्डो मानदण्डः। मानदण्डो हि मेयेन तुल्यपरिमाणो भवति। ननु परमेश्वरो ह्यत्र नायकः। तन्निर्देशाभावे कथमत्र वस्तुनिर्देशः। उच्यते। अत्र पताकावृत्तनायकभूतस्य हिमवतो निर्देशाद् वस्तुनिर्देशः। कथाशरीरं हि वस्तुशब्देनोच्यते। तत्र प्रधानभूतत्वान्नायकोऽपि वस्तु निर्देश्यम्। नायकास्तु प्रधाननायकपताकानायकप्रतिनायकभेदेन त्रिविधाः। तत्र घंघ-

---

१. 'नकु' ख. पाठः. २. 'क्तरी' ख. पाठः. ३. 'तमनु' ख. पाठः.

णाचार्यैः कथायां प्रधानभूतस्य नायकस्य निर्देशो वस्तुनिर्देश इत्युक्त्वा 'श्रियः पतिः श्रीमति शासितुं जगद्' इत्यादिश्लोकमुदाहृतवान्। भोजराजस्तु हयग्रीववधे काव्ये 'आसीद् दैत्यो हयग्रीव' इत्यादिश्लोकमुदाहृत्य प्रतिनायकनिर्देशस्यापि वस्तुनिर्देशत्वमुक्तवानिति युक्तमत्र पताकानायकनिर्देशस्यापि वस्तुनिर्देशत्वमित्यलमनेन। नच वस्तुनिर्देशमात्रोपक्रमेषु काव्येषु कविभिः शिष्टाचारसिद्धो मङ्गलाचारः समुपेक्षित इति शङ्कनीयम्। तत्रापि मानसस्य वाचिकस्य वा पारमेश्वरस्य नमस्कारस्य तैरङ्गीकृतत्वात्। अङ्गीकृतत्वे च तेषां शिष्टत्वमेव प्रमाणम्। कैश्चित् तु श्रोतृजनानुग्रहाय स्वग्रन्थेषु निवेश्यत[1] इत्येव विशेषः। इह तु महाकविगदावस्तिपदप्रयोगात् तेनैव परमार्थसतः परमात्मन एव प्रतिपादनाद् देवतात्मनो हिमवतः प्रतिपादनाच्च निष्प्रत्यूहपरिसमाप्त्यादिप्रयोजनं शिष्टाचारसिद्धमिष्टदेवतास्मरणात्मकं मङ्गलमपि कृतवानेवेत्यवसेयम्। अत्र प्रकृतस्य हिमवतस्तुल्यपरिमाणत्वलक्षणसमानधर्मयोगात् पृथिवीमानदण्डत्वेन संभावनादुत्प्रेक्षालङ्कारः। 'संभावनमथोत्प्रेक्षा प्रकृतस्य समेन यद्' इत्युत्प्रेक्षालक्षणम्॥ १॥

**यं सर्वशैलाः परिकल्प्य वत्सं**
**मेरौ स्थिते दोग्धरि दोहदक्षे।**
**भास्वन्ति रत्नानि महौषधीश्च**
**पृथूपदिष्टां दुदुहुर्धरित्रीम्॥ २॥**

(प्रकाशिका)

अथ,

"यत्तदादरुपादानं क्रियाभ्याससमुच्चयौ।
क्रियासमभिहारश्च वाक्यार्थान् युञ्जते मिथः॥"

इति न्यायेन यच्छब्दपरामर्शेन वर्णनावाक्यार्थान् प्रकृतेन योजयति—

**यं सर्वशैला इति।** पुरा किल पृथुरादिराजः प्रजानां सिद्धये गोरूपां पृथिवीं तत्तदद्दुहत्। तत्र च तेषु[2] वर्गेषु यथोचितं दोग्धारो वत्साश्च परिकल्पिता इति तदनुसारेणेदं वाक्यम्। मेराविति सतिसप्तमीति

---

१. 'श्यत:' ख. पाठः. २. 'षु तेषु व' ख. पाठः.

दक्षिणावर्तः । भोजसूत्रं तु 'क्रियार्हस्य कारकत्व' इति सप्तमीविधायकम् । दुदुहुरित्यन्तर्भावितण्यर्थत्वान्मेरोर्दोग्धृत्वं[1] न व्याहतम् । अनेन भुवः साराग्र्यवस्तुपात्रत्वमस्य हिमवतो द्योत्यते । यतो वत्सपीतशेषं[2] दोग्धार उपयुञ्जते । मेरुहिमवतोर्दोग्धृत्ववत्सत्वकरणवद् धरित्र्या गोत्वकरणमपि पृथूपदिष्टामिति विशेषणवशाल्लभ्यते[3] ॥ २ ॥

(विवरणम्)

अथ षोडशभिः श्लोकैरयमेव गिरिवर्यो यच्छब्दवाक्यैरुपवर्ण्यते । न च तत्रत्यानां यच्छब्दानां तच्छब्दाकाङ्क्षा, प्रागेवाध्याहृततच्छब्देन हिमालयशब्देनैवाकाङ्क्षानिवृत्तेः,

"यत्तदादेरुपादानं क्रियाभ्याससमुच्चयौ ।
क्रियासमभिहारश्च वाक्यार्थान् युञ्जते मिथः ॥"

इति न्यायात् । तत्रादौ हिमवतः स्वजातिश्रेष्ठत्वमाह—

यमिति । मेरौ दोग्धरि स्थिते सर्वशैलाः यं वत्सं परिकल्प्य धरित्रीं भास्वन्ति रत्नानि महौषधीश्च दुदुहुः । मेरौ महामेरौ दोग्धरि दोहनं कर्तरि स्थिते अवस्थिते । अत्र 'क्रियार्हस्य कारकत्व' इति भोजसूत्रेण सप्तमी । अत्र दोहनक्रियार्हस्यैव कारकत्वात् । सर्वशैलाः सर्वे निषधविन्ध्यादयोऽन्ये शैलाः यं हिमवन्तं वत्सं परिकल्प्य वत्सत्वेन कल्पयित्वा धरित्रीं भूमिं भास्वन्ति प्रशस्तशोभायुक्तानि, प्रशंसायां मतुप्, रत्नानि मरतकपद्मरागमौक्तिकप्रभृतीन् मणीन् महौषधीः महतीः वीर्ययुक्ताः ओषधीः मृतसञ्जीविनीप्रभृतीः । चकारः समुच्चयार्थः दुदुहुरित्यत्रान्तर्भूतण्यर्थत्वं द्रष्टव्यम् । अन्यथा मेरोर्दोग्धृत्वनिर्देशानुपपत्तेः । दोहयामासुरित्यर्थः । अत्र दुहेर्द्विकर्मकत्वाद् धरित्र्या रत्नादीनां च कर्मत्वम् । तत्र धरित्र्या 'अकथितं च' (१.४.५१) इति कर्मसंज्ञा । रत्नमहौषधीनां 'कर्तुरीप्सिततमं कर्म' (१.४.४९) इति कर्मसंज्ञा । हिमवतो वत्सत्वनिर्देशाद् दोहनकर्मभूताया धरित्र्याः पशुरूपधारणमितिहासप्रसिद्धमर्थादायातीति

---

१. 'त्वमन्या' ख. पाठः. २. 'त्सानिपी' ख. पाठः. ३. 'बलाल्ल' ख. पाठः. ४. 'हं क.' ख. पाठः.

तन्नोक्तम्। मेरोर्दोग्धृत्वे हेतुमाह—दोहदक्ष इति। दोहने दक्षे विदग्धे। यो यस्मिन् कर्मणि कुशलस्तं तस्मिन्नेव योजयेदिति[1] हि न्यायविदो वदन्ति। ननु कथं पृथिव्यां तत्र तत्रावस्थितानां रत्नमहौषधीप्रभृतीनां दोहनोपपत्तिः[2], अत आह—पृथूपदिष्टामिति। पृथुर्नाम नारायणांशभूतो राजा।

"वेनो नामाभवद्राजा दुश्शीलो दुष्पराक्रमः।
तं शप्त्वा मुनयो जग्मुः पीडितास्तदुपद्रवैः॥
राजाभावात् ततो जाता धरित्री दुर्जनाकुला।
ततस्ते मुनयः सर्वे सञ्चिन्त्य मनसा हरिम्॥
ममन्थुस्तस्य वेनस्य गतप्राणं कलेबरम्।
तस्मादभून्महातेजा अरणेरिव पावकः॥
नारायणांशसम्भूतः पृथुः पृथुपराक्रमः।"

इति भागवतप्रसिद्धायाः पृथूत्पत्तेः संक्षेपः। तेनोपदिष्टाम्। जनानामभीष्टदोहनार्थं त्वयानुकूलया भवितव्यमित्युपदेशप्रकारः। पुरा किल पृथुः क्षुत्क्षामदेहानां प्रजानाम् अन्नपानाद्यभीष्टसिद्ध्यर्थं गोरूपधरामुर्वीं प्रजाभिरात्माभीष्टमर्थं दोहयामास। तत्र तेषु तेषु वर्गेषु यथोक्तं दोग्धारो वत्साश्च परिकल्पिता इति भागवतप्रसिद्धा कथानेन वाक्येनोच्यते। नहि नारायणप्रभावात् किमपि दुर्लभमिति भावः। अत्र हिमवतो वत्सत्वनिर्देशाद् वसुन्धरासारभूतानां रत्नादीनां समृद्धिर्हिमवति द्योत्यते। वत्सनिपीतशेषं दोग्धार उपयुञ्जत इति न्यायात्। अपिच देवादीनामभीष्टदोहने महेन्द्रादीनां स्वजातिश्रेष्ठानामेव वत्सत्वं परिकल्पितम्।

"सर्वे स्वमुख्यवत्सेन स्वे स्वे पात्रे पृथक् पयः।
सर्वकामदुघां पृथ्वीं दुदुहुः पृथुभाविताः॥" (श्री. भा. ४.१८.२६.)

इति भागवतवचनात्। अतो हिमवतः स्वजातिश्रेष्ठत्वमनेन श्लोकेनोच्यते॥ २॥

---

१. 'ति न्या' क. पाठः २. 'नोत्पत्तिः' ख. पाठः.

अनन्तरत्नप्रभवस्य यस्य
हिमं न सौभाग्यविलोपि जातम् ।
एको हि दोषो गुणसन्निपाते
निमज्जतीन्दोः किरणेष्विवाङ्कः ॥ ३ ॥

(प्रकाशिका)

अनन्तेति । रत्नान्युत्तमवस्तूनि तेषां प्रभवो जन्मकारणम् । सौभाग्यमभिगम्यता । सन्निपातो बहूनां समवायः । निमज्जति न्यग्भवति । ननु विशेषस्य सामान्येन समर्थने किमत्र दृष्टान्तेन, यः खलु

"यथा रन्ध्रं व्योम्नश्चलजलदधूमः स्थगयति
स्फुलिङ्गानां रूपं दधति च यथा कीटमणयः ।
यथा विद्युज्ज्वालोल्लसनपरिपिङ्गाश्च ककुभ-
स्तथा मन्ये लग्नः पथिकतरुषण्डे स्मरदवः ॥"

इत्यत्र काव्यानुमानेऽपि कार्कश्यभयात् तर्कानुमान इव न प्रयुज्यते । तत्र ह्यप्रतीतप्रतीत्युत्पादनं क्रियते । अर्थान्तरन्यासे तु प्रतीतोपपादनम् । न च क्वचिदीदृशे विषये दृष्टान्तो दृश्यते । न च वाच्यं

"गुणानामेव दौरात्म्याद् धुरि धुर्यो नियुज्यते ।
असञ्जातकिणस्कन्धः सुखं स्वपिति गौर्गडिः ॥"

इत्यत्र सामान्यस्य समर्थको यो विशेषः स दृष्टान्त एव, एवमिहापि दृष्टान्तोऽस्त्विति । यतस्तत्र स एव समर्थकः प्रकृतायाः सामान्यव्याप्तेः । इह तु प्रकृतस्य विशेषस्य समर्थिका सेति विशेषः । न च तस्या अपि स्थिरीकरणाय दृष्टान्तोऽपेक्ष्यः । न हि काव्ये प्रमाणप्रतिपन्नेनैवार्थेन व्यवहारः, प्रतीतिमात्रस्यैव उपयोगात् । तत् कथमत्र दृष्टान्तः । उच्यते ।

---

१. 'अत्र' क. पाठः. २. 'न्यस' क. पाठः.

न तावदयं दृष्टान्तो व्याप्तिविरोधी, किन्त्वतिरिक्त इति शङ्क्यते । न चैवं शङ्क्यम् । चारुत्वाधानात् । अर्थान्तरन्यासस्य ह्यस्य (तु?) शृङ्गाराङ्गभूतः स्वभावसुकुमारोऽयं दृष्टान्तश्चारुत्वमाधत्ते । उक्तं च कुन्तकेन—

"अलंकारस्य कवयो यत्रालङ्करणान्तरम् ।
असन्तुष्टा निबध्नन्ति हारादेर्मणिबन्धवत् ॥ "

इति । यः पुनर्यच्छब्दवाक्यस्य तच्छब्दवाक्येन साकाङ्क्षत्वादर्थान्तरन्यासवाक्येनासम्बन्धः कैश्चिच्छङ्कितः, सोऽपि न । यतोऽत्र द्विधाकाङ्क्षा, शाब्दी चार्थी च । तत्र प्रथममर्थस्य स्वभावकृतत्वादन्तरङ्गभूताया आर्थ्या आकाङ्क्षाया अर्थान्तरन्यासवाक्यान्वयेन निवृत्तौ पश्चादितरान्वयेनेतरा निवर्तते ॥ ३ ॥

(विवरणम्)

नन्वस्य सर्वगुणास्पदत्वेऽपि हिमदोषदूषितत्वात् कुतो वैशिष्ट्यम्, अत आह—

अनन्तेति । अनन्तरत्नप्रभवस्य यस्य हिमं सौभाग्यविलोपि न जातम् । अनन्तरत्नप्रभवस्य अनन्तानां निरवधिकानां रत्नानामुत्तमवस्तूनां प्रभवस्य जन्मकारणस्य यस्य हिमवतः हिमं 'तुषारस्तुहिनं हिमम्' इत्यमरः । सौभाग्यविलोपि सौभाग्यम् अभिगम्यतागुणं विलोप्तुं नाशयितुं शीलं यस्य तादृशम् । अत्र रत्नशब्दः स्वजातिश्रेष्ठवाची 'रत्नं स्वजातिश्रेष्ठेऽपी'त्यमरः । उमाख्यस्य कन्यारत्नस्य, वैदूर्यादीनां मणिरत्नानां, देवदारुप्रभृतीनां वृक्षरत्नानां, मृतसञ्जीवनीप्रभृतीनाम् औषधरत्नानां, गङ्गादीनां सरिद्रत्नानां, सोमलताप्रभृतीना यज्ञद्रव्यरत्नानां[1] च प्रभवस्य जन्मकारणभूतस्य यस्य हिमदोष एको रमणीयतामपहन्तुं न शशाकेत्यर्थः । उक्तमर्थमर्थान्तरन्यासेन समर्थयते—एको दोषो गुणसन्निपाते निमज्जति हि । एकः असहायो दोषः गुणसन्निपाते एकत्र समवाये निमज्जति न्यग्भवति, तिरस्कृतो भवतीत्यर्थः । हिशब्दः प्रसिद्धौ ।

---

१. 'नां प्र' क. पाठः.

'हि हेतौ च प्रसिद्धौ च' इति भोजः। अत्र स्वभावसुकुमारं दृष्टान्तमुपन्यस्यति—इन्दोः किरणेषु अङ्क इव। इन्दोश्चन्द्रस्य किरणेषु रश्मिषु अङ्कः कलङ्क इव। 'कलङ्काङ्कौ लाञ्छनं च चिह्नं लक्ष्म च लक्षणमि'त्यमरः। न चात्रार्थान्तरन्यासस्य तर्कसमय इव दृष्टान्तेन समर्थनं, न शृङ्गाराङ्गमिति शङ्कनीयम्। अत्र दृष्टान्तस्य विशेषतश्चारुत्वाधानमात्रपरत्वादिति। यथाह कुन्तकाचार्यः—

"अलङ्कारस्य कवयो यत्रालङ्करणान्तरम्।
असन्तुष्टा निबध्नन्ति हारादेर्मणिबन्धवत्॥"

इति। अनेन श्लोकेनाभिगम्यत्वगुणयोगित्वं हिमवतः समर्थितम्। अत्र एको हि दोष इत्यत्र विशेषस्य सामान्येन समर्थनादर्थान्तरन्यासः।

"सामान्यं वा विशेषो वा तदन्येन समर्थ्यते।
यत्र सोऽर्थान्तरन्यासः साधर्म्येणेतरेण वा॥"

इति तस्य (लक्षणम्)। इन्दोः किरणेष्विवाङ्क इत्यत्र तूपमा। 'साधर्म्यमुपमा भेद' इति तल्लक्षणम्। अत्र तु तयोः संयोगरूपेणावस्थानात् संसृष्टिरलङ्कारः। 'एषां तिलतण्डुलन्यायेन मिश्रत्वे संसृष्टिः' इति तल्लक्षणम्। वस्तुतस्तु विकस्वरालङ्कार एव। यत्र कस्यचिद्विशेषस्य समर्थनार्थं सामान्यं विन्यस्य तत्प्रसिद्धावप्यपरितुष्यता कविना तत्समर्थनाय पुनर्विशेषान्तरमुपमारीत्या अर्थान्तरन्यासविधया वा विन्यस्यते, तत्र विकस्वरालङ्कारः। 'यस्मिन् विशेषसामान्यविशेषाः स विकस्वरः' इति च तल्लक्षणम्॥ ३॥

**यश्चाप्सरोविभ्रममण्डनानां**
**सम्पादयित्रीं शिखरैर्बिभर्ति।**
**बलाहकच्छेदविभक्तरागा-**
**मकालसन्ध्यामिव धातुमत्ताम्॥ ४॥**

---

१. 'म्यत्व' ख. पाठः.

(प्रकाशिका)

यश्चेति । चो वाक्यार्थसमुच्चये । विभ्रमेति विलासेन क्रियमाणानां मण्डनानां तदुपकरणीभावेन सम्पादयित्रीम् । वलाहकच्छेदाः सन्ध्यावायुना विच्छिन्ना मेघाः । यदुक्तं रघुवंशेऽपि 'दिनान्तमुग्रानिलभिन्नमेघम्' (१६. ११) इति । तेषु विभक्तः संक्रमितः स्वरूपभूतो रागो यया । अकालसन्ध्यामादित्यास्तमयकालव्यतिरिक्तकालभवां सन्ध्याम् । धातुमत्तां धातुसम्पदम् । अत्र शिखरप्रतिवस्तुभूतवलाहकच्छेदविभक्तरागया अकालसन्ध्यया शिखरगता धातुसम्पदध्यवसीयते, न तूपमीयते, सिद्धेनैवोपमानेन भवितव्यमिति । अयं च विवेको रघुवंशप्रकाशिकायां विस्तरेणास्माभिः कृतः, तत एवावधार्यताम् । दक्षिणावर्तस्तु 'विभ्रमस्त्वरयाकाले भूषास्थानविपर्यय' इति लक्षणानुसारेण विभ्रमशब्दं व्याख्याय यस्य शिखरलग्नां धातुमत्तामालोक्याकाले सायंसन्ध्याभ्रमेण त्वरमाणाः सायन्तनमण्डनमयथायथमप्सरसः कुर्वन्तीत्यभिप्राय इति व्याचष्ट । न चैतद् युक्तम् । स ह्यर्थो विभ्रमशब्दस्य शास्त्रव्यवहार एव । लोके तु विलासपर्यायो विभ्रमशब्दः । यथा 'बिब्बोकैर्बकसहवासिनां परोक्षैरि'त्यत्र बिब्बोकशब्दः । तदर्थत्वे मण्डनशब्दश्चातिरिक्तः । न च तासां तथा भ्रमः केनचिच्छब्देनोक्तः, यथा—

"कपाले मार्जारः पय इति कराँल्लेढि शशिन-
स्तरुच्छिद्रप्रोतान् बिसमिति करी सङ्कलयति ।
रतान्ते तल्पस्थान् वसनमिति गृह्णाति वनिता
प्रभामत्तश्चन्द्रो जगदिदमहो विप्लवयति ॥"

इत्यत्र, येन तासामयथायथं मण्डनमुपपद्यते । न च कविकर्तृका तत्सम्भावना तदुपपादयितुमलं, व्यधिकरणत्वात् । यदप्यत्रान्यदवकरप्रायमस्य व्याख्यानं, तद् विस्तरभयान्नोद्धाव्य दूषितम् ॥ ४ ॥

---

१. 'र्थः ।' ख. पाठः. २. 'त्याचाच' ख. पाठः. ३. 'ब्दः वि' क. पाठः.

(विवरणम्)

अथ शृङ्गाराङ्गभूताङ्गरागास्पदत्वेनाप्यस्य सर्वपर्वतोत्कर्षमाह—

यश्चेति। यः शिखरैः धातुमत्तां बिभर्ति[1] च। यो हिमवान् शिखरैः शृङ्गैः 'कूटोऽस्त्री शिखरं शृङ्गमि'त्यमरः । धातुमत्तां धातुसम्पदमित्यर्थः। बिभर्ति दधाति । चकारः पूर्वोक्तगुणग्रामसमुच्चयार्थः। धातुसम्पदां रमणीयत्वमाह—अप्सरोविभ्रममण्डनानां सम्पादयित्रीमिति । अप्सरसाम् अप्सरःस्त्रीणां विभ्रमेण विलासेन 'विभ्रमः सम्भ्रमे भ्रान्तौ शोभायां चे'ति वैजयन्ती। क्रियमाणानां मण्डनानामलङ्काराणां सम्पादयित्रीं स्वयमेव तदुपकरणतां सम्प्राप्य सम्पादयित्रीम् । अनेन विशेषणेन धातुसम्पदामप्रयाससाध्यत्वाद् अन्यालङ्कारसाधनेभ्यो व्यतिरेको दर्शितः । तादृशीं धातुसम्पदमुत्प्रेक्षते — वलाहकच्छेदविभक्तरागामकालसन्ध्यामिवेति। वलाहकच्छेदेषु छिन्नेषु वलाहकेषु । अत्र छेदशब्देन छिन्नं द्रव्यं लक्ष्यते । कार्यकारणभावश्च सम्बन्धः । छेदस्य तात्कालिकत्वप्रतिपादनेन मनोहारित्वप्रतीतिः फलम्। सन्ध्यावायुना विच्छिन्नेषु मेघेष्वित्यर्थः। उक्तं च रघुवंशे 'दिनान्तमुग्रानिलभिन्नमेघम्'(१६. ११) इति। विभक्तस्तादात्म्येन सङ्क्रमितो रागो यया ताम् अकालसन्ध्याम् आदित्यास्तमयकालव्यतिरिक्तकालसम्भवां सन्ध्यामिव। अत्र शिखरस्थानीयानि वलाहकशकलानि, अकालसन्ध्या तु धातुसम्पत्स्थानीयेति विवेकः । धातुसम्पदां रागातिशय उत्प्रेक्षाहेतुः । गोरोचनाद्यलङ्कारान्तरानादरप्रतीतिः फलम् ॥ ४ ॥

**पदं तुषारस्रुतिधौतरक्तं**
**यस्मिन्नदृष्ट्वापि हतद्विपानाम् ।**
**विदन्ति मार्गं नखरन्ध्रमुक्तै-**
**र्मुक्ताफलैः केसरिणां किराताः ॥ ५ ॥**

---

१. 'र्ति । यो' क. पाठः, २. 'न क्वि' क. पाठः,

(प्रकाशिका)

पदमिति । पदमङ्घ्रिविन्यासप्रतिबिम्बम् । तस्य तुषारस्रुति-धौतरक्तत्वाददर्शनम् । कुटिलत्वात् सरन्ध्रेषु नखेषु लग्नानां मुक्तानां पदविन्यासवशाद् गलनमित्यवसेयम् । अत्र मुक्तासंपदुदात्तमलङ्कारः ॥ ६ ॥

(विवरणम्)

सत्स्वपि सर्वेषु रत्नेषु हिमवति मुक्ताफलानां प्राचुर्यमाह—

पदमिति । किराताः यस्मिन् हतद्विपानां केसरिणां पदम् अदृष्ट्वापि नखरन्ध्रमुक्तैः मुक्ताफलैः मार्गं विदन्ति । किराता वनेचराः यस्मिन् हिमवति हतद्विपानां हताः निहताः द्विपाः गजाः यैः तेषां केसरिणां सिंहानां 'सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिरि'त्यमरः । पदम् अङ्घ्रिविन्यासप्रतिबिम्बम् । 'पदमङ्घ्रौ' इत्यारभ्य 'चिह्नेऽङ्घ्रिविन्यासे' इति केशवः । अदृष्ट्वा अनवलोक्यापि । अपिशब्दो विरोधमाह । नखरन्ध्रमुक्तैः नखानां रन्ध्रेभ्यो मुक्तैर्गलितैः । सिंहनखानां सरन्ध्रत्वं प्रसिद्धम् । मुक्ताफलैर्मौक्तिकैः मार्गं पन्थानं केसरिणामित्यनुषज्यते । विदन्ति जानन्ति । शोणिताक्त[1]स्य पदस्यानवलोकने हेतुमाह—तुषारस्रुतिधौतरक्तमिति । तुषारो हिमः 'तुषारस्तुहिनं हिमम्'इत्यमरः । तस्य स्रुतिभिः आस्रवैः धौतं क्षालितं रक्तं शोणितं यस्मिंस्तत् । अयमभिप्रायः—सर्वेषु हि पर्वतेषु हतगजानां सिंहानां शोणिताक्तानङ्घ्रिप्रतिबिम्बानवलोक्य किरातास्ताननुगच्छन्ति । हिमवति पुनः शोणितानामनवरतस्रुतहिमजलसंक्षालितत्वात् तादृशान् पदविन्यासानवलोक्यानुगन्तुमसमर्था अपि कुटिलेषु सरन्ध्रेषु नखेषु गजमस्तकेभ्यो लग्नानां मुक्ताफलानां पदविन्यासवशात् क्रमेण गलितत्वात् तान्येवावलोक्य सिंहानां मार्गमनुगच्छन्तीति । मौक्तिकानामुत्पत्तिर्गजेन्द्रेभ्योऽप्यस्तीत्युक्तमगस्त्येन—

---

१. 'क्ते' क. पाठः.

"द्विपेन्द्रजीमूतवराहशङ्खमत्स्याहिशुक्त्युद्भववेणुजानि ।
मुक्ताफलानि प्रथितानि लोके तेषां तु शुक्त्युद्भवमेव भूरि ॥"

इति । अत्रोदात्तमलङ्कारः, दर्शनसमय एवादाय रक्षितव्यानां मौक्तिकानां सिंहमार्गप्रदर्शनोपक्षीणत्वप्रतिपादनेन मुक्तासम्पदामुपादानात् । 'उदात्तं वस्तुनः संपद्' इति तल्लक्षणम् ॥ ५ ॥

**आमेखलं सञ्चरतां घनानां**
**छायामधःसानुगतां निषेव्य ।**
**उद्वेजिता वृष्टिभिराश्रयन्ते**
**शृङ्गाणि यस्यातपवन्ति सिद्धाः ॥ ६ ॥**

(प्रकाशिका)

आमेखलमिति । अभिविधावाङ् । अद्रेर्मध्यसानुप्रदेशेष्वित्यर्थः । सिद्धाः प्राप्ताष्टगुणैश्वर्या विश्वावसुप्रभृतयो देवयोनयः । छायाया निषेवणं ग्रीष्म आतपोद्वेगाद्, यथा वर्षासु वृष्ट्युद्वेगादातपस्य ॥६॥

(विवरणम्)

हिमवतः सर्वकालरमणीयत्वमाह—

आमेखलमिति । सिद्धाः आमेखलं संचरतां घनानां छायाम् अधस्सानुगताः निषेव्य वृष्टिभिः उद्वेजिताः यस्य शृङ्गाणि आश्रयन्ते । सिद्धाः संप्राप्ताष्टैश्वर्या विश्वावसुप्रमुखा देवयोनयः । आमेखलम्, अभिविधावाङ् । मेखला मध्यसानुप्रदेशः । तत्रैव सञ्चरतामित्यर्थः । घनानां मेघानां छायाम् अनातपम् । 'छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातप' इत्यमरः । अधस्सानुगताः अधोभागे ये सानवः प्रस्थाः 'स्नुः प्रस्थः सानुरस्त्रियाम्' इत्यमरः । तान् गताः

१. 'तां' मुद्रितकोशपाठः. २. 'ङ् । म' ख. पाठः.

प्राप्ताः सन्तः उष्णबाधानिवृत्तिपर्यन्तं नितरां सेवित्वा । छायानिषेवणे पूर्वमातपोद्वेजितं हेतुरिति द्रष्टव्यम् । पुनश्च वृष्टिभिरुद्वेजिताः पीडिताः सन्तो यस्य हिमवतः शृङ्गाणि शिखराणि आश्रयन्ते सेवन्ते । हिमवच्छिखरेषु वर्तमाना गन्धर्वादयः पूर्वमातपोद्वेजिताः किंचित्कालमधोवर्तिनो भूत्वा छायासुखमनुभूय पुनश्च शीतबाधायां जायमानायां शृङ्गप्रदेशमेवाश्रयन्त इत्यर्थः । शृङ्गनिषेवणे हेतुमाह—आतपवन्तीति । प्रशंसायां मतुप् । प्रशस्तातपयुक्तानीत्यर्थः । प्रशस्तत्वं च सद्य एव शीतबाधकत्वात् । अत्र पर्वतवर्तिनां जनानां छायातपयोर्यथेष्टनिषेवणप्रतिपादनेनातिक्रान्तमेघमार्गत्वप्रतिपादनेन चास्य सर्वकालरमणीयत्वमौन्नत्यं चोक्तम् । अत्र काव्यलिङ्गमलङ्कारः । वृष्टिभिरुद्वेजिता इति पदद्वयस्य आतपवन्तीति पदस्य च शृङ्गनिषेवणे हेतुत्वेनोपादानात् । 'काव्यलिङ्गं हेतोर्वाक्यपदार्थता' इति तल्लक्षणम् । अयमलङ्कारः प्रायेण सार्वत्रिकः ॥ ६ ॥

न्यस्ताक्षरा धातुरसेन यत्र
भूर्जत्वचः कुञ्जरबिन्दुशोणाः ।
व्रजन्ति विद्याधरसुन्दरीणा-
मनङ्गलेखक्रिययोपयोगम् ॥ ७ ॥

(प्रकाशिका)

न्यस्ताक्षरा इति । कुञ्जरा इव बिन्दुशोणाः । 'उपमानानि सामान्यवचनैः'(२.१.५५) इति समासः । कुञ्जरेषु पद्मकाख्यं[1] बिन्दुजालकम् । 'बिन्दुः पद्मकं बिन्दुजालकम्' इति सिंहः । भूर्जत्वक्षु धातुद्रवबिन्दुर्बिन्दुः । कुञ्जरस्थानीया भूर्जत्वचः । बिन्दुजालकस्थानीया धातुद्रवविहिताक्षरबिन्दवः । अनङ्गसूचकं पत्रमनङ्गलेखः तस्य क्रियया करणेन उपयोगमङ्गभावम् अर्थात् प्रियतमाह्वानादौ । विद्याधराः खङ्गगुलिकाञ्जनादिविद्याधारिणो जीमूतवाहनादयः ॥ ७ ॥

---

१. 'श्राढ्यं' ख. पाठः

(विवरणम्)

अथ शृङ्गाराङ्गभूतपदार्थसमृद्धिरस्मिन् पर्वते चतुर्भिः श्लोकैरुपवर्ण्यते। तत्रादौ प्रियतमानयनादौ यदुपकरणं, तस्य समृद्धिमाह—

न्यस्ताक्षरेति। यत्र भूर्जत्वचः विद्याधरसुन्दरीणाम् अनङ्गलेखक्रियया उपयोगं व्रजन्ति। भूर्जत्वचः मृदुतरास्तद्देशसुलभा वृक्षत्वग्विशेषाः। 'भुजपत्रो भुजो भूर्जो मृदुत्वक् चर्मचर्मिका' इति यादवः। विद्याधरसुन्दरीणां विद्याधरस्त्रीणाम् अनङ्गसूचकं पत्रम् अनङ्गलेखः तस्य क्रियया करणेन उपयोगम् अङ्गभावं प्रियतमाह्वानादावित्यर्थात् सिध्यति। सर्वत्र हि तालीपत्रादौ आत्मनः सन्देशान् विलिख्य कामिन्यः कामुकेभ्यः प्रयच्छन्ति, हिमवति तु भूर्जत्वक्ष्विति भावः। तेन च मनोहरतराणां भूर्जत्वचां सुन्दरीणां च निरवधिकत्वं ध्वन्यते। उपयोगप्रकारमाह—धातुरसेन न्यस्ताक्षरा इति। धातुरसो धातुद्रवः तेन न्यस्तानि लिखितान्यक्षराणि यासु तास्तथा। गैरिकरसविलिखिताक्षरा इत्यर्थः। अत एव कुञ्जरबिन्दुशोणाः कुञ्जरा इव बिन्दुशोणाः। 'उपमानानि सामान्यवचनैः' (२. १. ५५) इति समासः। बिन्दुभिः शोणाः बिन्दुशोणाः। कुञ्जरेषु बिन्दवः पद्मकानि। 'पद्मकं बिन्दुजालकम्' इत्यमरः। भूर्जत्वक्षु धातुद्रवबिन्दवः। अनेन विशेषणेन परभागदर्शनीयत्वमपि भूर्जत्वचां प्रतिपादितम् ॥ ७ ॥

यः पूरयन् कीचकरन्ध्रभागान्
दरीमुखोत्थेन समीरणेन।
उद्गास्यतामिच्छति किन्नराणां
तानप्रदायित्वमिवोपगन्तुम् ॥ ८ ॥

(प्रकाशिका)

य इति। कीचका वेणवः। 'वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः' इति सिंहः। किन्नरा अश्वमुखा देवगायना इति दाक्षिणात्याः। तत्र निरूप्यते। 'बिम्बोष्ठं बहुमनुते तुरङ्गवक्त्रश्चुम्बन्तं मुखमिह किन्नरं

प्रियायाः' (४. ३८) इत्यत्र माघप्रयोगे अश्वमुखादन्यः किन्नर इति प्रतीयते। भट्टमयूरप्रयोगे तु

"मार्गोपान्ते सुमेरोर्नुवति कृतनतौ नाकधाम्नां निकाये
वीक्ष्य व्रीलावतीनां प्रतिकुहरमुखं किन्नरीणां मुखानि।
सूतेऽसूयत्यपीषज्जलगति वहतां कन्धरार्धैर्वलद्भि-
र्वाहानां व्यस्यताद्वः सममसमहरेर्हेषितं कल्मषाणि॥"

इत्यत्राश्वमुखः किन्नर इति प्रतीयते। अत्र हि कुहरस्थानां तासां मुखमात्रदर्शने वाहानां स्वजातिभ्रमादभिलाषः, 'नान्ययोनिषु गन्धर्वा मनः कुर्वन्ति सङ्गम' इति वचनात्[1]। तस्मादश्वमुखानश्वमुखभेदेन [2]द्विधा किन्नरजातिः। सा च मुखमात्रे[3] तद्व्यतिरिक्तगात्रमात्रे च नराकृतित्वात् किन्नरकिंपुरुषशब्दाभ्यां वितर्कव्युत्पादिताभ्यामुच्यत इत्यवसेयम्[4]। तानो नामोद्गातव्यस्य स्वरादेरियत्तापरिच्छेदः। स चांशस्वर उच्यते। अत्राभिनवगुप्तः—

"द्विकत्रिकचतुष्काः स्युर्ज्ञेया वंशगताः स्वराः।
अधोऽधस्तारतां प्राप्तास्तानस्त्वंशस्वरो मतः॥"

इति। अंशस्वरलक्षणे भरतः—

"रागो यस्मिन् निवसति यस्माच्चापि प्रवर्तते।
नेता च तारमन्द्राणां योऽत्यर्थं चोपलभ्यते॥
ग्रहोपन्यासविन्यासंसन्यासन्यासगोचरः।
अनुवृत्तश्च यश्चेह सोंऽशः स्याद् दशलक्षणः॥"

इति। तानप्रदानं[6] च वंशेनैव कार्यम्। 'गाता यं यं स्वरं गच्छेत् तं तं वंशेन वादयेदि'ति भरतः। अत्र सर्वो वाक्यार्थ उत्प्रेक्ष्यते। ननु पूरणादेर्वास्तवस्य किमुत्प्रेक्षया। न। गिरेस्तत्रै[7] तावत् पूरणव्यापारासम्भवः।

१. 'त्' ख. पाठः. २. 'द्विविधा' ख. पाठः. ३. 'त्रे न' क. पाठः. ४. 'षे' ख. पाठः. ५. 'ता' ख. पाठः. ६. 'नं वं' क. पाठः. ७. 'त्र पू' क. पाठः.

तत एव च तत्कारकवर्गस्याप्यसंभवः, क्रियापेक्षित्वात् कारकाणाम् । ततस्तत्सर्वमुत्प्रेक्षाप्राणकम्[1] । तामेव च दरीमुखेति रूपकमुपस्करोति । यथा 'पिनष्टीव तरङ्गाग्रैरुदधिः फेनचन्दनम्' इत्यत्र । एवं तत्कर्तृकाया-मिच्छायां तदङ्गभूतपदार्थवर्गे चोत्प्रेक्षा । तर्हीवशब्दः केनान्वयमुपेयात् । प्रधानभूतेनेच्छतिना । प्रधानभूततदर्थोत्प्रेक्षयैव सामर्थ्यादितरोत्प्रेक्षासिद्धेः । यथाह महिमा—

"एकत्रोत्प्रेक्षितत्वेन यत्रार्था बहवो मताः ।
तत्रेवादिः प्रयोक्तव्यः प्रधानादेव नान्यतः ॥"

इति ॥ ८ ॥

(विवरणम्)

उद्दीपनसद्भावमप्याह—

य इति । यः दरीमुखोत्थेन समीरणेन कीचकरन्ध्रभागान् पूरयन् उद्गास्यतां किन्नराणां तानप्रदायित्वम् उपगन्तुम् इच्छतीव । यो हिमवान् दरीमुखोत्थेन दर्येव मुखं दरीमुखं, दरी गुहा । तस्या मुखत्वारोपो वंशपूरणोत्प्रेक्षासिद्ध्यर्थम् । दरीमुखादुत्तिष्ठतीति दरीमुखोत्थः । 'आतश्चोपसर्गे' (३. १. १३६) इति कर्तरि कः । 'उदःस्थास्तम्भोरि'(८. ४. ६१)ति पूर्वसवर्णश्च । तेन समीरणेन वायुना कीचकानां सरन्ध्राणां वेणूनां, 'वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धता' इति सिंहः । रन्ध्रभागान् रन्ध्रप्रदेशान् । 'भागः प्रदेशे शकले भागधेये च कथ्यते' इति भोजः । पूरयन् सन् उद्गास्यताम् । 'लृटः सद्वा' (३. ३. १४) इति लृटः शत्रादेशः । उच्चैर्गानं करिष्यतामित्यर्थः । तानप्रदानस्य गानारम्भात् पूर्वमेव कर्तव्यत्वनियमादुद्गास्यतामित्युक्तं, न तूद्गायतामिति । किन्नराणां किम्पुरुषाणाम् । अश्वमुखा अनश्वमुखाश्चेति द्विविधाः किन्नराः । अश्वमुखाः मुखव्यतिरिक्तेषु गात्रेषु नराकृतयः । अनश्वमुखास्तु मुखे नराकृ-

1. 'ब द' ख. पाठः.

तयः इतरत्र पश्चाकृतयः। अत एव नरः किमयं, पुरुषः किमयमिति शङ्का-जनकत्वादुभे च जाती किन्नरकिम्पुरुषाभ्यामुच्येते इति विवेकः। अत एव माघेन द्विविधा किन्नरजातिरुक्ता।

"बिम्बोष्ठं बहुमनुते तुरङ्गवक्त्रश्चुम्बन्तं मुखमिह किन्नरं प्रियायाः।
श्लिष्यन्तं पुनरितरोऽपि तं निजस्त्रीमुत्तुङ्गस्तनभरभङ्गभीरुमध्याम्॥"

(४. ३८) इति। तानप्रदायित्वं तानं प्रदातुं शीलमस्येति तानप्रदायी, तस्य भावस्तत्त्वम्। उद्गातव्यस्य स्वरादेरियत्तापरिच्छेदस्तानं इत्युच्यते। स एवांश-स्वर इति च व्यपदिश्यते। यथोक्तमभिनवगुप्तेन —

"द्विकत्रिकचतुष्काः स्युर्ज्ञेया वंशगताः स्वराः।
अधोऽधस्तारतां प्राप्तास्तानस्त्वंशस्वरो मतः॥"

इति। अंशस्वरलक्षणं च भरतेनोक्तं —

"रागो यस्मिन्निवसति यस्माच्चापि प्रवर्तत।
नेता च तारमन्द्राणां योऽत्यर्थं चोपलभ्यते॥
ग्रहोपन्यासविन्याससंन्यासन्यासगोचरः।
अनुवृत्तश्च यश्चेह सोंऽशः स्याद् दशलक्षणः॥"

इति। तदुपगन्तुं प्राप्तुमिच्छतीव। तानप्रदानं च वंशेनैव कर्तव्यमित्याह भरतः— 'गाता यं यं स्वरं गच्छेत् तं तं वंशेन वादयेदि'ति। अत एव रघुवंशे वंशकृत्य-मित्युक्तं 'स कीचकैर्मारुतपूर्णरन्ध्रैः कूजद्भिरापादितवंशकृत्यम्'(२.१२) इति। यथा केषुचिद् गातुमारब्धेषु गानारम्भात्पूर्वं कश्चिन्मुखमारुतेन वेणुसुषिरं पूर-यन् गेयानां स्वराणाम् इयत्तापरिच्छेदं करोति, तथायमपि कर्तुमिच्छतीवेति क्रियोत्प्रेक्षा। यद्यप्यत्र मुखमारुतेन वेणुरन्ध्रपूरणादिकं सर्वमप्युत्प्रेक्षितमेव, तथाप्ययमिवशब्दः प्रधानभूतेनेच्छतिनैवान्वयमुपेयात्। तदन्वये च सामर्थ्या-दितरोत्प्रेक्षापि सिध्यति। यथाह महिमा —

१. 'म उ' क. पाठः.

"एकत्रोत्प्रेक्षितत्वेन यत्रार्था बहवो मताः ।
तत्रैवादिः प्रयोक्तव्यः प्रधानादेव नान्यतः ॥"

इति । गानादीनामुद्दीपनत्वं प्रसिद्धम् । उक्तं च शाकुन्तले — 'रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान् पर्युत्सुकीभवति यत् सुखितोऽपि जन्तुः' (५. २) इति । अत्र दरीमुखोत्थेनेत्यत्र रूपकमलङ्कारः । 'तद् रूपकमभेदो य उपमानोपमेययोः' इति तल्लक्षणम् । तदेव रूपकमुत्प्रेक्षाणामभिव्यञ्जकम् । तस्मादत्र सजातीयानामुत्प्रेक्षाणां विजातीयस्य रूपकस्य च परस्परार्थापेक्षत्वादङ्गाङ्गिभावलक्षणः सङ्करः । 'अविश्रान्तिजुषामात्मन्यङ्गाङ्गित्वं तु सङ्करः' इति तल्लक्षणम् ॥ ८ ॥

**कपोलकण्डूः करिभिर्विनेतुं**
**विघट्टितानां सरलद्रुमाणाम् ।**
**यत्र स्रुतक्षीरतया प्रसूतः**
**सानूनि गन्धः सुरभीकरोति ॥ ९ ॥**

(प्रकाशिका)

कपोलकण्डूरिति । विघट्टितानां कपोलकषणेन[1] मृदितानां सरलद्रुमाणां गन्ध इत्यन्वयः ॥ ९ ॥

(विवरणम्)

हिमवति सौरभ्यस्याप्यप्रयाससाध्यत्वमाह—

कपोलेति । यत्र करिभिः कपोलकण्डूः विनेतुं विघट्टितानां सरलद्रुमाणां स्रुतक्षीरतया प्रसूतो गन्धः सानूनि सुरभीकरोति । यत्र हिमवति करिभिः गजैः कपोलकण्डूः कपोलयोः गण्डप्रदेशयोः कण्डूः स्रवन्मदजल-

---

१. 'कषेण मृ' ख. पाठः.

तया भ्रमराधिष्ठिततया च जनिता गण्डकण्डूतीः विनेतुं शमयितुं विघट्टितानां संघर्षणोन्मृदितानां सरलद्रुमाणां सुगन्धिनिर्यासानां[1] वृक्षविशेषाणां स्रुतक्षीरतया स्रुतानि गलितानि क्षीराणि निर्यासा येभ्यः, तेषां भावस्तत्ता, तया हेतुना प्रसूतः उद्भूतः गन्धः सानूनि प्रस्थान् सुरभीकरोति सुगन्धीकरोति। अभूततद्भावे च्विः। प्रस्थशब्देनात्र प्रस्थगताः पदार्था अप्युपलक्ष्यन्ते। यत्र गजैः परिमृदितानां सरलद्रुमाणां गन्धः सौरभ्यरहितानपि पदार्थान् सुरभिलान् करोतीत्यर्थः। सुगन्धानामुद्दीपनत्वमनुभवसिद्धं, 'यथा सन्निधिमात्रे(ण)गन्धः क्षोभाय जायत' इत्यादिवचनसिद्धं च ॥ ९॥

वनेचराणां वनितासखानां
दरीगृहोत्सङ्गनिषक्तभासः।
भवन्ति यत्रौषधयो रजन्या-
मतैलपूराः सुरतप्रदीपाः ॥ १० ॥

(प्रकाशिका)

वनेचराणामिति। 'तत्पुरुषे कृति बहुलम्'(६.३.१४)इत्यलुक्। इदं विशेषोक्तावुदाहृतं वामनेन। अस्मन्मते तु रूपकविशेष एवायम् ॥

(विवरणम्)

रतिप्रदीपानामप्यप्रयाससाध्यत्वमाह—

वनेचराणामिति। यत्र ओषधयः रजन्यां वनितासखानां वनेचराणाम् अतैलपूराः सुरतप्रदीपाः भवन्ति। यत्र हिमवति ओषधयः रात्रावुज्ज्वला वृक्षविशेषाः रजन्यां रात्रौ वनितानां सखायो वनितासखाः तेषाम्। षष्ठीतत्पुरुष एवात्र समासः। बहुव्रीहिविवक्षायां तु समासप्रत्ययो न स्यात्।

---

1. 'न्ध' क. पाठः.

स्त्रीसहितानामित्यर्थः । अनेन विशेषणेन सुरतप्रदीपानामुचितत्वमुक्तम् । वने चरन्तीति वनेचराः तेषाम् । 'तत्पुरुषे कृति बहुलम्'(६.३.१४) इत्यलुक् । अतैलपूराः तैलानां स्नेहानां पूरेण रहिताः । तैलनिषेकनिरपेक्षा इत्यर्थः । अनेनाप्रयाससाध्यत्वमुक्तम् । मध्ये विनाशाभावादयश्च द्योत्यन्ते । सुरतोपयोगिनः प्रदीपाः सुरतप्रदीपाः । सुरतगृहे दीपस्याप्यावश्य(कत्व)मुक्तं रतिरहस्ये—

"प्रसृतसुरभिधूपे पुष्पदामावकीर्णे
ज्वलितमहितदीपे धाम्नि कामी सुवेषः ।
सह सहचरवर्गैर्वामभागे निवेश्य
स्त्रियमुपहितभूषां भावयेन्नर्मगोष्ठीम् ॥"

इति । ओषधीनां रतिप्रदीपत्वरूपणे हेतुमाह —दरीगृहोत्सङ्गनिषक्तभास इति । दर्यो गुहाः, ता एव गृहा दरीगृहाः, तेषाम् उत्सङ्गेष्वन्तर्भागेषु निषक्ताः नितरां सक्ताः भासः प्रभा यासां तास्तथा । अत्रौषधीनां सुरतप्रदीपत्वेन रूपणात् सुरतप्रदीपानामतैलपूरत्वविशिष्टत्वाच्च सविशेषणं रूपकमलङ्कारः, भोजराजेन रूपकभेदस्य चतुर्धा दर्शितत्वात् 'समस्तं व्यस्तमुभयं सविशेषणमित्यपि' इति ॥ १० ॥

**उद्वेजयत्यङ्गुलिपार्ष्णिभागान्**
**मार्गे शिलीभूतहिमेऽपि यत्र ।**
**न दुर्वहश्रोणिपयोधरार्ता**
**भिन्दन्ति मन्दां गतिमश्वमुख्यः ॥ ११ ॥**

(प्रकाशिका)

उद्वेजयतीति । उद्वेजयत्यपीत्यन्वयः । अङ्गुलिपार्ष्णिभागग्रहणं

१. 'रणेन र' क. पाठः. २. 'रवि' ख. पाठः.

शैत्यभयादसमग्रपादतलार्पणं द्योतयति । अत्र शैत्यदुःखादपि श्रोणिपयो-धरदुर्वहत्वदुःखस्य तत्कार्यभूतशीघ्रगतिविरुद्धस्वकार्यसम्पादनेन प्रबलतरत्वमुक्तम् ॥ ११ ॥

( विवरणम् )

इत्थमुपवर्णितानामुद्दीपनानां तदनुरूपवनिताजनसद्भावप्रतिपादनेन सोपयोगत्वमाह—

उद्वेजयतीति । यत्र अश्वमुख्यः दुर्वहश्रोणिपयोधरार्ताः मन्दां गतिं न भिन्दन्ति । यत्र हिमवति अश्वमुख्यः किन्नराङ्गनाः दुःखेनोह्यन्त इति दुर्वहाः । कृच्छ्रार्थे खल् । तैः श्रोणिपयोधरैः श्रोण्या जघनस्थलेन पयोधराभ्यां स्तनाभ्यां च आर्ताः पीडिताः सत्य इति मन्दगमनपरित्यागाभावे हेतुः । मन्दां गतिम् अत्यन्तमन्दं गमनं न भिन्दन्ति नान्यथा कुर्वन्ति, न परित्य-जन्तीत्यर्थः । ननु स्त्रियः श्रोणिपयोधरभारान्मन्दमेव गच्छन्ति । अत्र को विस्मयः, यदेवमुच्यत इत्यत्राह—शिलीभूतहिमे मार्गे अङ्गुलिपार्ष्णिभागान् उद्वेजयत्यपीति । शिलीभूतानि शिलात्वं प्राप्तानि हिमानि यस्मिंस्तस्मिन् मार्गे अङ्गुलीः पार्ष्णिभागौ च । गुल्फयोरधोभागः पार्ष्णिशब्देनोच्यते । 'तद्ग्रन्थी घुटिके गुल्फौ पुमान् पार्ष्णिरधस्तयोः' इत्यमरः । उद्वेजयति पीडयति सत्यपि । अत्रापिशब्दः शीघ्रगमनस्य कारणपौष्कल्यं दर्शयति । अङ्गुलीनां मार्दवाधिक्यात् तासु शैत्यकाठिन्यबाधाया अप्याधिक्यमिति शैत्यादिभयात् पार्ष्णिभागाभ्यां गमनम् । तेन च तत्रापि पीडाधिक्यमिति पार्ष्णि-शब्दं प्रयुञ्जानस्याभिप्रायः । अत्र शैत्यादिदुःखस्य कार्यं शीघ्रगमनम् । तत्तु श्रोणिपयोधरदुर्वहत्वखेदेन बाध्यत इति श्रोणिपयोधरगौरवातिशयः प्रतिपा-दितः । तेन च तत्रत्यानां वधूनां सर्वावयवसौन्दर्यं दर्शितम् ॥ ११ ॥

**दिवाकराद्रक्षति यो गुहासु**
**लीनं दिवा भीतमिवान्धकारम् ।**

---

१. 'तरणस्य' क. ख. ग. पाठः.

क्षुद्रेऽपि नूनं शरणं प्रपन्ने
ममत्वमुच्चैःशिरसां सतीव ॥ १२ ॥

(प्रकाशिका)

दिवाकरादिति । भीतमिव दिवा गुहासु लीनमित्यन्वयः । क्षुद्रोऽनार्यः। शरणं प्रपन्ने शरणत्वेनात्मानमुपसन्न इत्यर्थः । ममत्वं मदीयमित्यभिमानित्वम् । ममेत्यस्मच्छब्दप्रतिरूपकमव्ययमिति केचित् । अन्ये तु—सर्वेषां प्रायः शब्दानां त्रयोऽर्थाः—स्वरूपं व्यवहार्योऽर्थो बुद्धिश्च । तत्र स्वरूपं यथा—घटशब्दस्य घकारटकारसमुदायः । व्यवहार्योऽर्थो यथा—तस्य पृथुबुध्नोदराकारो मृदादिविकारः । बुद्धिर्यथा—तद्विषया तदाकारा च बुद्धिः । तत्र बुद्ध्यर्थत्वे शब्दशक्तिस्वाभाव्याद् इत्यवच्छिन्नत्वेन वृत्तिगतत्वेन वा केवलं प्रयोगः । यथा घट इति बुद्धिरिति, घटबुद्धिरिति वा, न तु स्वातन्त्र्येण प्रयोगः । तस्मान्ममशब्दस्य ममेति बुद्धिरर्थः[2], यथा 'निर्मम' इत्यत्र । तया चात्र तद्वाल्लँक्ष्यते । तस्य भावो ममत्वमिति समर्थयन्ते । उच्चैश्शिरसाम् उन्नतानाम् । सति आर्ये । अत्र काव्यप्रकाशकृता दूषितम् । तद्यथा—उत्प्रेक्षितमपि तात्त्विकेन रूपेण परिवर्जितत्वान्निरुपाख्यप्रख्यम् । तत्समर्थनाय यदर्थान्तरन्यासोपादानं, तदालेख्यमिव गगनतलेऽत्यन्तमसमीचीनमिति निर्विषयत्वमेव तस्य, अनुचितार्थतैव दोष इत्युक्त्वा इमं तु श्लोकमुदाहृत्यात्राचेतनस्य तमसो दिवाकरात् त्रास एव न संभवतीति कुत एव तत्प्रयोजितमद्रिणा परित्राणम् । संभावितेन तु रूपेण प्रतिभासमानस्यास्य न काचिदनुपपत्तिरिति व्यर्थ[6] एव तत्समर्थनायां यत्न इति । तदयुक्तम् । यतः परित्राणं वक्तुं प्रकृतम् । तत्र हेतुत्वेन केवलं भीतिरसंभविनी संभाव्यते । परि-

१. 'बिष्ठे श' ख. पाठः. २. 'रित्यर्थः' क. ग. पाठः. ३. 'ति कु' ख. पाठः. ४. 'एत' ख. पाठः. ५. 'कदाचि' ख. पाठः. ६. 'र्थ एत' ख. पाठः. ७. 'त्र तु तदेव' ग. पाठः.

चमर्यश्चमरमृग्यः । अत्र चमरस्त्रीणामुपादानेन स्त्रीणामेव चामरग्रहणाधिकार इति दर्शयति । यथोक्तम् 'एतासामरविन्दसुन्दरदृशां द्राक् चामरान्दोलनाद्' इति । यस्य हिमवतः गिरिराजशब्दं गिरिराजोऽयमिति शब्दं बालव्यजनैः निजलाङ्गूलमयैश्चामरैरर्थयुक्तं यथार्थं कुर्वन्ति । प्रकृतिषद्कस्वामित्वं हि सामान्यतो राजशब्दस्यार्थः । अतोऽत्र तत्स्वामिनश्चिह्नभूतैर्बालव्यजनैः गिरिराजशब्दस्यार्थयुक्त(त्व)करणमुपचार इत्यरुणाचलनाथेन व्याख्यातम् । वयं तु बालव्यजनावधूननदर्शनेनायमेव गिरिराज इति या सर्वजनप्रतीतिः, तत्करणमेवात्रार्थयुक्तत्वकरणमिति मन्यामहे, प्रतीतिमात्रपरायणत्वात् काव्यव्यवहाराणाम् । न केवलं बालव्यजनानां सत्तामात्रम्, अपितु वीजनमपि दृश्यत इत्याह — लाङ्गूलविक्षेपविसर्पिशोभैरिति । लाङ्गूलानां बालदण्डानां विक्षेपेण चालनेन विसर्पिण्यो व्यापिन्यः शोभा येषु तैः । अनेन विशेषणेन व्यजनान्दोलनसमयसम्भविनी महती शोभा दर्शिता, बालदण्डानां व्यजनदण्डसाम्यं च प्रकाशितम् । सितव्यजनसाम्यमप्याह — इतस्ततश्चन्द्रमरीचिगौरैरिति । इतस्ततः समन्ततः सर्वत इत्यर्थः । चन्द्रमरीचिगौरैः चन्द्रस्य मरीचिवत् किरणवद् गौरैः धवलैः, सर्वश्वेतैरित्यर्थः ॥ १३ ॥

**यत्रांशुकाक्षेपविलज्जितानां**
**यदृच्छया किंपुरुषाङ्गनानाम् ।**
**दरीगृहद्वारि विलम्बिबिम्बा-**
**स्तिरस्करिण्यो जलदा भवन्ति ॥ १४ ॥**

(प्रकाशिका)

**यत्रेति । आक्षेपो हरणम् । यदृच्छया सङ्गत्या । बिम्बं शरीरम् । 'बिम्बोऽस्त्री मण्डलसमप्रतिमासुरवल्लरीषु । प्रतिबिम्बे तत्प्रकृतौ' इति यादवः । तिरस्करिण्यो यवनिकाः । अत्र लज्जया गुहागृहनाय**

करतलेषु व्यापार्यमाणेषु दैवोपनतेन जलदरोधतमसा समीहितसौकर्यमिति समाधिरलङ्कारः प्राधान्येन ध्वन्यते ॥ १४ ॥

( विवरणम् )

नवोढानुसरणमप्यत्रैव सुखकरमित्याह—

यत्रेति । यत्र अंशुकाक्षेपविलज्जितानां किम्पुरुषाङ्गनानां जलदाः तिरस्करिण्यो भवन्ति । यत्र हिमवति अंशुकाक्षेपविलज्जितानाम् अंशुकानां वसनानाम् आक्षेपेण हरणेन विलज्जितानां विशेषेण लज्जितानाम् । नवोढा हि पूर्वमेव लज्जिताः प्रियतमकृते[2] तु वसनहरणे विशेषेणेति भावः । किंपुरुषाङ्गनानां किन्नरस्त्रीणां जलदा मेघा एव तिरस्करिण्यो यवनिका भवन्ति । 'प्रतिसीरा यवनिका स्यात् तिरस्करिणी च सा' इत्यमरः । जलदानां यवनिकात्वप्राप्तिप्रकारमाह — यदृच्छया दरीगृहद्वारि विलम्बिबिम्बा इति । यदृच्छया यादृच्छिकसङ्गत्या दरीगृहद्वारि दरीरूपाणां सुरतभवनानां द्वारि द्वारप्रदेशे विलम्बिनो लम्बनशीला बिम्बाः शरीराणि येषां ते तथा । 'बिम्बोऽस्त्री मण्डलसमप्रतिमामुखलक्ष्मसु । प्रतिबिम्बे तत्प्रकृतौ' इति यादवः । गुहाद्वारे घनोपरुद्धे सति गुहायामोषधिप्रकाशादिप्रवेशाभावात् तमोवृद्धिः । ततश्च गुह्यगोपनार्थं करतलादिव्यापारनैरपेक्ष्यमिति भावः । अत्र जलदेषु तिरस्करिणीत्वमारोपितम् । तस्य च प्रकृतोपयोगित्वात् परिणामोऽलङ्कारः । 'आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणाम' इत्यलङ्कारसूत्रम् । काव्यप्रकाशकृतः पक्षे तु रूपकमेव । 'अतैलपूरा' इत्यत्राप्येवं द्रष्टव्यम् । तत्र सविशेषणस्य रूपकस्यातिस्फुटत्वादयमलङ्कारो नोक्तः । अत्र समाधिरलङ्कारः प्राधान्येन ध्वन्यते च । जलदरोधतमसा नवोढागुह्यगोपनकार्यसिद्धेः । 'समाधिः सुकरं कार्यं कारणान्तरयोगत' इति ॥ १४ ॥

---

१. 'लादिषु' ख. पाठः. २. 'ते व' क. पाठः. ३. 'शाभा' क. पाठः. ४. 'स्याति' क. पाठः.

भागीरथीनिर्झरशीकराणां
वोढा मुहुः कम्पितदेवदारुः ।
यद्वायुरन्विष्टमृगैः किरातै-
रासेव्यते भिन्नशिखण्डिबर्हः ॥ १५ ॥

(प्रकाशिका)

भागीरथीति । मुहुः सद्यः । 'पौनःपुन्ये भृशार्थे च सद्योर्थे स्यान्मुहुःपदम्' इत्यजयः । अत्रेदं च प्रमाणं 'भित्त्वा सद्यः किसलयपुटं देवदारुद्रुमाणाम्' (उत्तरमेघे. ४४) इति प्रयोगः । यद्वायुर्य-त्सम्बन्धी वायुः । अन्विष्टमृगैरिति श्रमस्य विभावः, वायुसेवनमनुभावः । भिन्न इतस्ततो विकीर्णः शिरोभूषणं शिखण्डिबर्हो यैः ॥ १५ ॥

( विवरणम् )

हिमवति वायोरपि गुणोत्कर्षमाह—

भागीरथीति । यद्वायुः अन्विष्टमृगैः किरातैः आसेव्यते । य-द्वायुर्यत्सम्बन्धी वायुः अन्विष्टा मृगा यैस्तैः । मृगान्वेषणार्थमितस्ततः कृता-वधानैरित्यर्थः । अनेन श्रमस्य विभाव उक्तः । किरातैः शबरैः आसेव्यते आभीक्ष्ण्येन सेव्यत इति श्रमस्यानुभावः । वायोः श्रमहरत्वद्योतकानि विशेषणान्याह— भागीरथीत्यादिना । तत्र शैत्यमाह— भागीरथीनिर्झरशी-कराणां वोढा इति । भागीरथ्यां गङ्गायामेव निर्झरे वारिप्रवाहे । 'वारिप्रवाहो-निर्झरो झर' इति सिंहः । हिमवति निर्झरो गङ्गैव । तत्र ये शीकराः जल कणाः । 'शिकरोऽम्बुकणाः स्मृता' इत्यमरः । तेषां वोढा वाहकः । सौरभ्य-माह— मुहुः कम्पितदेवदारुरिति । मुहुः पुनः पुनः कम्पिता देवदारवो वृक्ष-विशेषा येन । देवदारूणां सौरभ्यातिशयः प्रसिद्धः । मुहुःपदेन सौरभ्यस्यान-

१. 'शी' ख. ग. पाठः. २. 'गुणो' क. ख. पाठः.

न्त्यमुक्तम् । मुहुःपदस्य सद्य इति वार्थः । 'पौनःपुन्ये भृशार्थे च सद्योर्थे स्यान्मुहुःपदम्' इत्यजयः । 'भित्त्वा सद्यः किसलयपुटं देवदारुद्रुमाणाम्'(उत्तरमेघे. ४४) इति मेघसन्देशप्रयोगश्चास्मिन्नर्थे प्रमाणम् । मान्द्यमाह—भिन्नशिखण्डिबर्ह इति । भिन्ना इतस्ततो विकीर्णाः शिखण्डिनां वनप्रदेशेषु वर्तमानानां बर्हिणां बर्हाः पिञ्छाः येन स तथा शिखण्डिबर्हैर्निरुद्धवेगप्रसरत्वाद् वायोर्मान्द्यम् । 'भिन्नशिखण्डिबर्हैरि'ति पाठे वायोः सकलशरीरस्पर्शार्थं स्वकराभ्यामितस्ततो विक्षिप्ता निजशिरोमण्डनशिखण्डिबर्हा यैरित्यर्थः । अस्मिन्नर्थे वायुसेवनस्वभावोक्त्या स्वभावोक्तिरलङ्कारः । 'स्वभावोक्तिस्तु डिम्भादेः स्वक्रियारूपवर्णनम्' इति तल्लक्षणम् । अत्र तमःप्रकृतीनां मृगवधलालसानां किरातानामप्यनवरतगङ्गाजलसेवनप्रतिपादनेन प्रारब्धभोगक्षये तत्रत्यानां मुक्तिरेव (इति) ध्वन्यते ॥ १५ ॥

सप्तर्षिहस्तावचितावशेषा-
ण्यधो विवस्वान् परिवर्तमानः ।
पद्मानि यस्याग्रसरोरुहाणि
प्रबोधयत्यूर्ध्वमुखैर्मयूखैः ॥ १६ ॥

(प्रकाशिका)

सप्तर्षीति । अवशिष्यत इत्यवशेषः । कर्मणि घञ् । 'त्रिष्वन्यत्रोपयुक्तत' इति केशवस्वामिवचनादुपयुक्तादन्यदभिदधानस्य शेषशब्दस्य विशेष्यलिङ्गत्वमवसेयम् । हस्तशब्दः स्वयङ्ग्रहणेनादरं द्योतयति । सप्तर्षीत्यादिपदेन विशिष्टोपयोगित्वमुक्तम् । अथवा सप्तर्षिहस्तावचिताविति निमित्तसप्तमी । अशेषाणीति बोधनस्य प्रायत्निकत्वं ध्वनितम् । सप्तर्षिस्थानस्य सूर्यादुपरिवर्तित्वादियमुक्तिः । वक्ष्यति च 'नित्यमर्काच्च सोमाच्च परमध्यास्महे पदम्' (६. १९) इत्यादि ॥ १६ ॥

---

१. 'म' क. पाठः.

(विवरणम्)

औन्नत्यमाह—

सप्तर्षीति। विवस्वान् यस्य अग्रसरोरुहाणि पद्मानि ऊर्ध्वमुखैः मयूखैः प्रबोधयति। विवस्वान् आदित्यः यस्य हिमवतः अग्रसरोरुहाणि अग्रसरस्सु अधित्यकावर्तिषु सरस्सु कमलिनीषु रोहन्ति उद्भवन्तीति तथा पद्मानि कमलानि ऊर्ध्वमुखैः ऊर्ध्वं मुखानि अग्रभागा येषां तैः मयूखैः रश्मिभिः प्रबोधयति उन्मीलयति। सविता यस्य शिरःपुष्करिणीषु प्ररूढानि कमलानि बिम्बस्य पृष्ठभागादूर्ध्वं गतैरेव मयूखैरुन्मीलयतीत्यर्थः। तत्र हेतुमाह—अधः परिवर्तमान इति। अधित्यकापेक्षयात्यन्तमधोभाग एव परितो वर्तमानः। तत्रत्यानां पद्मानां विशिष्टोपयोगित्वमाह—सप्तर्षिहस्तावचितावशेषाणीति। सप्तर्षिभिरादरातिशयात् स्वहस्तैरेवावचितानि लूनानि। अवशिष्यत इत्यवशेषः। कर्मणि घञ्। 'त्रिष्वन्यत्रोपयुक्ततः' इति केशवस्वामिवचनं शेषशब्दस्याभिधेयवल्लिङ्गत्वे प्रमाणम्। सप्तर्षिभिर्देवतार्चनाद्यर्थं[1] यानिकानिचिदवचितानि, पुनश्च पद्मानां बहुत्वात् सरस्स्वेवावशिष्टानि पद्मानीत्यर्थः। सप्तर्षिहस्तावचिताविति वा पदच्छेदः। निमित्तसप्तमी चेयम्। अशेषाणि समस्तानि। यत्र सूर्यः सप्तर्षीणामुपयोगार्थं समस्तानि पद्मानि प्रबोधयतीत्यर्थः। सप्तर्षीणां सूर्यमार्गादुपरि वर्तमानत्वादित्थमुक्तम्। उक्तं च वसिष्ठसिद्धान्ते—

"औत्तानपादिरखिलग्रहकारकाणा-
  मुच्चैस्तरे वसति धाम्नि ततोऽप्यधस्तात्।
सप्तर्षिमण्डलमवस्थितमप्यमुष्मात्
  तिष्ठन्त्यधो नभसि च ग्रहतारकाद्याः॥"

इति। वक्ष्यति च 'नित्यमर्काच्च सोमाच्च परमध्यास्महे पदम्' (६. १९) इति। अत्र हिमवतः सूर्यमार्गोल्लङ्घित्वकथनादौन्नत्यं भङ्ग्यन्तरेणोक्तमिति पर्यायो-

---

१. 'नार्थं' ख. पाठः.

क्तमलङ्कारः । 'गम्यस्यापि भङ्ग्यन्तरेणाभिधानं पर्यायोक्तम्' इति । अग्रसरोरुहाणि पद्मानीत्यत्र पुनरुक्तवदाभासोऽलङ्कारः । 'पुनरुक्तवदाभासो विभिन्नाकारशब्दगः । एकार्थतेव' इति ॥ १६ ॥

यज्ञाङ्गयोनित्वमवेक्ष्य यस्य
सारं धरित्रीधरणक्षमं च ।
प्रजापतिः कल्पितयज्ञभागः
शैलाधिपत्यं स्वयमन्वतिष्ठत् ॥ १७ ॥

(प्रकाशिका)

यज्ञाङ्गेति । यज्ञाङ्गानि सोमलताप्रभृतीनि । अत्र पुराणवचनं[2] ज्ञापकं—

"हिरण्यगर्भो भगवान् व्याजहार हरिं प्रति ।
देवतानां मुनीनां च समक्षं सर्वसाक्षिणम् ॥
अस्य देवस्य वामाङ्गाज्जातस्त्वमनया सह ।
दक्षिणाङ्गात् समुद्भूतः सृष्ट्यर्थं जगतामहम् ॥
यज्ञाङ्गार्थं मया सृष्टो हिमवानचलेश्वरः ।"‡

इति । सारो बलम् । कल्पितो हस्तिरूपो यज्ञभागो येन । अत्र किल श्रुतिः प्रमाणम् । स्वयं आत्मना । अन्वतिष्ठद् अन्तर्भावितण्यर्थः[3] प्रयोगः । "अनुष्ठितानन्तरजाविवाहः" (रघु. ७. ३२) इतिवत् । यज्ञाङ्गयोनित्वाद् यज्ञभागं कल्पयित्वा तस्य साराधिकत्वाच्छैलाधिपत्यं प्रजापतिः स्वयमनुष्ठापितवानित्यर्थः । हिमवन्तमधिष्ठाय प्रजापतिः स्वयं शैलाधिपत्यमनुष्ठितवानि[4]ति पुराणवचनविरुद्धम् । तद् यथा ब्रह्माण्डे—

१. 'गं' मुद्रितकोशपाठः. २. 'नं · हि' ङ. पाठः. ३. 'र्थत्वात् प्र' क. ग. घ. ङ. पाठः. ४. 'ष्ठापित' क. पाठः.

‡ विष्णुपुराणम् ।

"शैलानां हिमवन्तं च नदानामथ सागरम् ।
गन्धर्वाणामधिपतिं चक्रे चित्ररथं विधिः ॥"

इति । अत्र प्रकरणे 'यं सर्वे'त्यादिना स्वजातिश्रेष्ठत्वम्, 'अनन्तरत्ने'-त्यादिनाभिगम्यत्वं, 'पदं तुषारे'त्यादिना लाङ्गूले'त्यादिना च रत्नसम्पद्, 'आमेखलमि'त्यादिना सर्वकालसुखत्वं, 'दिवाकरादि'त्यादिना संश्रितरक्षणं, 'सप्तर्षी'त्यादिना तुङ्गत्वं, 'यज्ञाङ्गे'त्यादिना देवत्वमैश्वर्यं च, इतरैस्तु श्लोकैर्यथासम्भवं शृङ्गाराङ्गभूतपदार्थवत्तया रमणीयत्वं चोक्तम् ॥ १७ ॥

(विवरणम्)

देवत्वमैश्वर्यं चाह—

यज्ञेति । प्रजापतिः यस्य यज्ञाङ्गयोनित्वं धरित्रीधरणक्षमं सारं च अवेक्ष्य कल्पितयज्ञभागः शैलाधिपत्यं स्वयम् अन्वतिष्ठत् । प्रजापतिर्ब्रह्मा यस्य हिमवतो यज्ञाङ्गानां सोमलताप्रभृतीनां योनित्वम् उद्भवस्थानत्वम् । एतच्च पुराणप्रसिद्धं—

"हिरण्यगर्भो भगवान् व्याजहार हरिं प्रति ।
देवतानां मुनीनां च समक्षं सर्वसाक्षिणम् ॥
अस्य देवस्य वामाङ्गाज्जातस्त्वमनया सह ।
दक्षिणाङ्गात् समुद्भूतः सृष्ट्यर्थं जगतामहम् ॥
यज्ञाङ्गार्थं मया सृष्टो हिमवानचलेश्वरः ।"

इति । धरित्रीधरणक्षमं धरित्र्याः भूमेः धरणे धारणे क्षमं शक्तं सारं बलं च अवेक्ष्य सम्यगवलोक्य कल्पितयज्ञभागः कल्पितो यज्ञेषु यागेषु भागो हस्तिरूपोऽशो येन तथाभूतः सन्, इन्द्राद्यैस्तुल्यमेवास्य हविर्भागं कल्पयित्वेत्यर्थः । हिमवतो हस्ती यज्ञभाग इति श्रुतिप्रसिद्धिः । शैलाधिपत्यं पर्वताधिपतित्वं स्वयमन्वतिष्ठत् स्वयमेवानुष्ठापितवान् । अन्तर्भूतण्यर्थोऽयं प्रयोगः । 'अनुष्ठितानन्तरजा-

विवाहः' (रघु. ७. ३२) इतिवत्[1] । प्रजापतिः स्वयमेव हिमवन्तमधिष्ठाय शैलाधिपतित्वमनुष्ठितवानिति कैश्चिद् व्याख्यातम् । तत्तु पुराणविरुद्धम् । यथोक्तं ब्रह्माण्डे —

"शैलानां हिमवन्तं च नदानामथ सागरम् ।
गन्धर्वाणामधिपतिं चक्रे चित्ररथं विधिः[2] ॥"

इति । अत्र यज्ञाङ्गयोनित्वमित्यादिना क्रमेणोद्दिष्टयोरर्थयोः कल्पितयज्ञभाग इत्यादिना पश्चान्निर्देशाद् यथासङ्ख्यमलङ्कारः । 'उद्दिष्टानामर्थानां क्रमेणानूद्देशो यथासङ्ख्यम्' इति ॥ १७ ॥

**स मानसीं मेरुसखः पितॄणां**
**कन्यां कुलस्य स्थितये स्थितिज्ञः ।**
**मेनां मुनीनामपि माननीया-**
**मात्मानुरूपां विधिनोपयेमे ॥ १८ ॥**

(प्रकाशिका)

स इति । मुनीनामपि माननीयां ब्रह्मवाद्योगवत्तया । अत्र श्रीविष्णुपुराणवचनं—

"पितरो ब्रह्मणा सृष्टा व्याख्याता ये मया तव ।
अग्निष्वात्ता बर्हिषदो नाग्नयः साग्नयश्च ये ॥
तेभ्यः स्वधासुता जज्ञे मेना *वैतरणी[3] तथा ।
ते उभे ब्रह्मवादिन्यौ योगिन्यौ चाप्युभे द्विज ! ॥"

इति । तस्या मानसीत्वे ब्रह्माण्डवचनं—

"तेषां तु मानसी कन्या मेना नाम महागिरेः ।
पत्नी हिमवतो यस्याः पुत्रो मैनाक उच्यते ॥"

---

१. 'ति रघुवंशब्रयोगवत्' ख. पाठः. २. 'धिः । अ' क. पाठः. ३. 'रमणी' ङ. पाठः.

---

* 'वैधारणी' इति संज्ञा दृश्यते ।

इति। कुलस्य स्थितये, न तु कामाय। अनेनातिसत्त्वोत्तरत्वादस्य शान्तनायकत्वम् अस्याश्च मुनीनामपि माननीयत्वेन द्योतितम्। अत एवात्मानुरूपामित्युक्तिः। स्थितिर्मर्यादा, गृहीतविद्येन गुरुकुलनिवृत्तेन गार्हस्थ्यमङ्गीकार्यमिति या शास्त्रमर्यादा तस्या अभिज्ञः। विधिना शास्त्रतः। एवञ्च सदपत्येन कुलस्थितिः स्यात्। मेरुसख इत्यनेन वरणसंविधानादिषु तत्सहायत्वमुक्तम् ॥ १८ ॥

(विवरणम्)

इत्थमुपवर्णितस्य हिमवतो जगदेकनायिकायाः प्रबन्धनायिकाया उत्पत्तिहेतुभूतं विवाहं वर्णयति—

स इति। सः मेनां विधिना उपयेमे। सः हिमवान् मेनां नाम्ना मेनेति प्रसिद्धां विधिना शास्त्रतः। शास्त्रसिद्धेन विधिना स्वीकृतायां हि भार्यायां सदपत्येन कुलस्थितिर्भवेदिति भावः। उपयेमे परिणीतवान्। ननु पूर्वोक्तसकलगुणविशिष्टः स किमर्थं कामोपभोगे मनः कृतवानित्यत्राह—कुलस्य स्थितये इति। कुलस्य वंशपरम्परायाः स्थितये स्थिरत्वाय, न कामार्थमित्यर्थः। अनेनातिसत्त्वोत्तरत्वादस्य शान्तनायकत्वमुक्तम्। तेन च पार्वतीजन्मयोग्यत्वं ध्वनितम्। मेनायाः कुलशुद्धिमाह—पितॄणां मानसीं कन्यामिति। पितॄणां अग्निष्वात्तादीनां मानसीं मनसो जाताम्। अनेनायोनिजत्वमुक्तम्। तेन च दिव्यत्वं ध्वन्यते। उक्तञ्च मेनाया मानसीत्वं ब्रह्माण्डे—

"तेषां तु मानसी कन्या मेना नाम महागिरेः।
पत्नी हिमवतो यस्याः पुत्रो मैनाक उच्यते[3] ॥"

इति। अत्र तेषामिति पुराणे प्रकृतानां पितॄणामुपादानम्। बहुसहायसाध्ये विवाहे हिमवतः सहायसम्पत्तिं दर्शयति — मेरुसख इति। मेरोः सुमेरोः सखा। अनेन वरणादिष्वपि तत्सहायत्वं द्रष्टव्यम्। हिमवतः शास्त्रीयविवाह-

---

१. 'दा, गुरुगृ' क. ग. घ. पाठः. २. 'गि' क. ख. घ. पाठः. ३. 'ते। अ' ख. पाठः.

प्रवृत्तौ हेतुमाह — स्थितिज्ञ इति। स्थितिर्मर्यादा, तां जानातीति स्थितिज्ञः। विद्याग्रहणानन्तरं गुरुसकाशान्निवृत्तेन गार्हस्थ्यमङ्गीकार्यं, पुनश्चाग्न्याधानादिकर्म कर्तव्यमिति शास्त्रमर्यादां जानन्नित्यर्थः । मेनाया उत्तमनायिकात्वमाह — मुनीनामपि माननीयामिति। मुनीनां मुनिभिः। 'कृत्यानां कर्तरि वा' (२. ३. ७१) इति षष्ठी । सर्वमाननीयैर्मुनिभिरपि माननीयामित्यपिशब्दार्थः । मुनिमाननीयत्वं ब्रह्मवादवत्तया योगवत्तया च । तदुक्तं श्रीविष्णुपुराणे—

> "पितरो ब्रह्मणा सृष्टा व्याख्याता ये मया तव।
> अग्निष्वात्ता बर्हिषदो नाग्नयः साग्नयश्च ये ॥
> तेभ्यः स्वधासुता जज्ञे मेना वैतरणी तथा।
> ते उभे ब्रह्मवादिन्यौ योगिन्यौ चाप्युभे द्विज! ॥"

इति। अत एव प्रागुक्तस्य नायकगुणविशिष्टस्य हिमवतः सदृशी भार्या चेयमित्याह-आत्मानुरूपामिति। आत्मनोऽनुरूपां सदृशीम्। 'कुलाद्यैः सदृशीं भार्यां विन्देत स्नातको द्विजः' इत्यादिस्मृतेरिति भावः । अत्र कामव्यपोहाय कुलस्य स्थितय इत्युक्तमिति परिसङ्ख्यालङ्कारः ।

> "किञ्चित् पृष्टमपृष्टं वा कथितं यत् प्रकल्पते।
> तादृगन्यव्यपोहाय परिसङ्ख्या तु सा स्मृता ॥"

इति ॥ १८ ॥

> **असूत सा नागवधूपभोग्यं**
> **मैनाकमम्भोनिधिबद्धसख्यम्।**
> **क्रुद्धेऽपि पक्षच्छिदि वृत्रशत्रा-**
> **ववेदनाज्ञं कुलिशक्षतानाम् ॥ १९ ॥**

(प्रकाशिका)

**असूतेति**। नागवधूपभोग्यत्वं तत्परिणयनादिति दक्षिणावर्तः[3]।

१. 'शी चे' क. ख. ग. घ. पाठः. २. 'वर्तते' क. ख. ग. घ. पाठः. ३. 'र्तः। इ' ख. पाठः.

वयं तु समुद्रमग्नस्य नागलोकसन्निकर्षादिति मन्यामहे। तत्सख्यस्य फलमाह—क्रुद्धेऽपीति। अत्रेतिहासः सुलभः। ननु किमनेन मैनाकोत्पत्तिकथनेन कथानुपकारिणा। न। देव्याः सभ्रातृकत्वेन परिणेयत्वात्। अत्र मनुः—

"यस्यास्तु न भवेद् भ्राता न विज्ञायेत वा पिता।
नोपयच्छेत तां प्राज्ञः पुत्रिकाधर्मशङ्कया॥" (अ. ३. श्लो. ११)

इति॥ १९॥

(विवरणम्)

"यस्यास्तु न भवेद् भ्राता न विज्ञायेत वा पिता। नोपयच्छेत तां प्राज्ञः" इति मनुवचनेनाभ्रातृकाणां स्त्रीणां परिणेयत्वनिरासाद् भवान्याः सभ्रातृकत्वं प्रतिपादयितुं मेनायां पुत्रोत्पत्तिं दर्शयति[2]—

असूतेति। सा मैनाकम् असूत। सा मेना मैनाकं नाम पर्वतम् असूत प्रसूतवती। मेनातनूजस्य सौभाग्यातिशयमाह — नागवधूपभोग्यमिति। नागवधूभिः सर्पस्त्रीभिः उपभोग्यम् उपभोक्तुं योग्यम्। नागवधूपभोग्यत्वे हेतुमाह— अम्भोनिधिबद्धसख्यमिति। अम्भोनिधिना समुद्रेण सह बद्धं स्थिरीकृतं सख्यं बन्धुत्वं येन तं, सदा समुद्रस्थमित्यर्थः[3]। समुद्रस्य नागलोकसंनिकर्षाद् भुजङ्गाङ्गनोपभोग्यमिति भावः। समुद्रसख्यस्य फलमाह—वृत्रशत्रौ पक्षच्छिदि क्रुद्धेऽपि कुलिशक्षतानामवेदनाज्ञमिति। वृत्रशत्रौ वृत्राभिधानस्यासुरस्य शत्रौ। अनेनास्य दुरभिभवत्वमुक्तम्। तेन च महाजनसख्यस्य[4] फलपरिपूर्तिर्ध्वन्यते। पक्षौ छिनत्तीति पक्षच्छिद् तस्मिन्, पक्षच्छेदोद्युक्ते सतीत्यर्थः। न केवलमुद्युक्तः, कुपितश्चेत्याह—क्रुद्ध इति। अपिशब्देन पक्षच्छेदस्य कारणपौष्कल्यं दर्शयति। कुलिशक्षतानां वज्रप्रहारजनितानां व्रणानाम् अवेदनाज्ञं वेदनां पीडां जानातीति वेदनाज्ञः वेदनाज्ञो न भवतीत्यवेदनाज्ञः

१. 'न पिता ज्ञातयोऽपि वा' क. पाठः. २. 'वर्णय' क. ख. ग. घ. पाठः. ३. 'त्यर्थः।' क. ग. घ. पाठः. ४. 'ख्यफ' क. ख. ग. घ. पाठः.

तम् । महेन्द्रे पक्षच्छेदोद्युक्ते रुष्टेऽपि महासत्त्वस्य समुद्रस्य सख्याद्द्यापि कुलिशक्षतवेदनानभिज्ञमित्यर्थः ।

"सर्वेऽपि पर्वताः पूर्वं पक्षवन्तः किलाभवन् ।
ततस्तेषामवस्थानैर्वेगैः पक्षसमीरणैः ॥
चूर्णीभूतान् जनपदानवलोक्याथ वृत्रहा ।
क्रुद्धः कुलिशमादाय पक्षच्छेदेन पर्वतान् ॥
क्षणेन स्थावरीचक्रे मैनाकस्तरसा ततः ।
अम्भोधिमतिगम्भीरं महासत्त्वमुपाश्रितः ॥
समुद्रसख्याद्द्यापि तत्पत्रौ नाहृतौ"

इति कथानेन श्लोकेन दर्शिता ॥१९॥

**अथावमानेन पितुः प्रयुक्ता**
**दक्षस्य कन्या भवपूर्वपत्नी ।**
**सती सती योगविसृष्टदेहा**
**तां जन्मने शैलवधूं प्रपेदे ॥ २० ॥**

(प्रकाशिका)

एवमाधिकारिकस्य पीठिकात्वेन प्रासङ्गिकमुपवर्ण्याधिकारिकं प्रस्तौति —

अथेति । अथशब्दः प्रकरणान्तरोपक्रमद्योतकः । अवमानेन स्वभर्तुर्हविर्भागाप्रदानादिकृतेन प्रयुक्ता प्रेरिता । पितुरिति पितुः परमगुरुत्वात् तद्विषये प्रकारान्तरेण कोपप्रतीकारः कर्तुमनुचित इति द्योत्यते । सती इदं दक्षसुतात्वे नाम । सती भवन्ती । योगविसृष्टदेहा सतीत्यन्वयः । शैलवधूमिति स्त्रीजनने स्त्रियाः प्राधान्यात् । अत्र भवपूर्वपत्नीत्यनेन परशक्तिरूपत्वं ध्वनयता भुवनैकमातुः स्वेच्छया विग्रहत्यागस्वीकारावुपपादितौ ॥ २० ॥

(विवरणम्)

इत्थं पीठप्रतिष्ठामुपपाद्याधिकारिकं वृत्तमेव प्रस्तुवन् नायिकाया उत्पत्तिं वर्णयति श्लोकद्वयेन। तत्रादौ देव्याः पूर्वजन्मवृत्तान्तसंक्षेपकथनेन नित्याया एव तस्या उत्पत्तौ हेतुं वदन्नुत्पत्तेः पूर्वावस्थामाह—

अथेति। अथ दक्षस्य कन्या भवपूर्वपत्नी पितुः अवमानेन प्रयुक्ता योगविसृष्टदेहा सती सती जन्मने तां शैलवधूं प्रपेदे। अथशब्दोऽयं प्रकरणान्तरोपक्रमद्योतकः। 'मङ्गलानन्तरारम्भप्रश्नकात्स्न्र्येष्वथो अथ' इत्यमरः। दक्षस्य दक्षप्रजापतेः कन्या पुत्री भवपूर्वपत्नी भवस्य परमशिवस्य पूर्वपत्नी प्राचीनभार्या। अनेन नित्यायाः परमशक्तिरूपायाः देव्याः स्वेच्छयैव शरीरत्यागस्वीकारसामर्थ्यं दर्शितम्। पितुः आत्मनो जनकभूतस्य दक्षस्य अवमानेन स्वभर्तुर्हविर्भागाप्रदानादिरूपया निन्दया प्रयुक्ता प्रेरिता देहत्यागायेति शेषः। परमगुरौ पितरि विषये प्रकारान्तरेण कोपप्रतीकारोपायादर्शनात् तदवमानेन शरीरत्यागायैव प्रेरितेत्यर्थः। योगविसृष्टदेहा जीवात्मनः परमात्मनि योजनं योग इत्युच्यते, तेन विसृष्टः परित्यक्तो देहो यया। सती भवन्ती। सती दक्षसुतात्वे देव्या नाम। जन्मने स्वोत्पत्तये तां पूर्वोक्तसकलगुणविशिष्टां शैलवधूं मेनां प्रपेदे प्राप्ताभूत्। हिमवत्प्राप्तिद्वारेणेत्यर्थात् सिध्यति। स्त्रीजन्मनि स्त्रीणामेव प्राधान्याच्छैलवधूं प्रपेद इत्युक्तम्। पितुरवमानेन शरीरत्यागाय प्रेरिता योगाग्निना निर्दग्धशरीरा भवन्ती सतीदेवी स्वजन्मलाभाय लोकोत्तरगुणविशिष्टां मेनां प्राप्तवतीत्यर्थः। अनेन स्वेच्छयैव देव्याः शरीरपरित्यागस्वीकाराविति दर्शितम्।

"पुरा किल पुरारातावबमानं प्रकाशयन्।
अनाहूयैव तं देवं देवानन्यानुपानयत्॥

मोहान्धो यज्ञमारेभे दक्षो दाक्षायणी तदा।
अनाहूता स्वपित्रापि प्रतिषिद्धापि शम्भुना॥

जगाम स्वपितुर्गेहं यज्ञदर्शनलालसा।
अनादृतापि पित्रा सा दृष्ट्वा च सकलाः क्रियाः॥

१. 'याः स्त्रे' क. ख. ग. घ. पाठः. २. 'क्तं भवति। पि' ख. पाठः.

रुद्रभागविनिर्मुक्ताः कोपेनापाटलेक्षणा ।
त्याज योगमास्थाय दक्षेणोत्पादितं वपुः ॥"

इति श्रीभागवतादिप्रसिद्धायाः कथायाः सङ्क्षेपः ॥२०॥

**सा भूधराणामधिपेन तस्यां**
**समाधिमत्यामुदपादि भव्या ।**
**सम्यक्प्रयोगादपरिक्षतायां**
**नीताविवोत्साहगुणेन सम्पद् ॥ २१ ॥**

(प्रकाशिका)

सेति । समाधिमत्यां तपस्विन्याम् । वक्ष्यति च 'अलं समाधिना' (५. ४५) इति । कथमन्यथा परमेश्वरीजन्माधिकरणतेति भावः। उदपादि अजनि । कर्मण्ययं प्रयोगः । उत्पत्तिश्चात्र—

"सुराणां कार्यसिद्ध्यर्थमाविर्भवति सा यदा ।
उत्पन्नेति तदा लोके सा नित्याप्यभिधीयते ॥"

इति न्यायेन द्रष्टव्या । भव्या कल्याणी । अपरिक्षतायाम् अविहतायाम्। नीतौ सन्ध्यादिप्रयोगे । उत्साहस्य गुणेनासंमोहाध्यवसायादिस्वकारणसामग्रीलक्षणेन । कर्मधारयपक्षे गुणशब्दो गतार्थः। अत्रोपमायामधिकरणयोर्विशेषणे बिम्बप्रतिबिम्बभावेन स्थिते । भव्येति तु कर्मणोः साधारणम् । उपमया च तल्लाभेन मेनाहिमवतोः कृतार्थता द्योत्यते ॥२१॥

(विवरणम्)

अथ देव्या उत्पत्तिं वर्णयति—

सेति । सा भूधराणाम् अधिपेन समाधिमत्यां तस्याम् उदपादि । सा दाक्षायणी भूधराणां पर्वतानाम् अधिपेन श्रेष्ठेन हिमवता समाधिमत्यां समाधिस्तपः । वक्ष्यति च—

---

१. 'कारिते' ब. पाठः.

"दिवं यदि प्रार्थयसे वृथा श्रमः पितुः प्रदेशास्तव देवभूमयः[1]।
अथोपयन्तारमलं समाधिना न रत्नमन्विच्छति मृग्यते हि तद् ॥" (५.४५)

इति। तद्वत्यां तपस्विन्यामित्यर्थः। अनेन परमेश्वरीजन्माधिकरणत्वयोग्यता दर्शिता। तस्यां मेनायाम् उदपादि। कर्मण्ययं प्रयोगः। गर्भसंस्कारादिपुरस्सरं जनिताभूदित्यर्थः। उत्पत्तिश्चात्र नित्याया भगवत्या देवकार्यसिद्ध्यर्थं स्वेच्छया शरीरस्वीकार एव। तदुक्तं देवीमाहात्म्ये—

"देवानां कार्यसिद्ध्यर्थमाविर्भवति सा यदा।
उत्पन्नेति तदा लोके सा नित्याप्यभिधीयते ॥"

इति। अत्र तारकासुरनिग्रहार्थं कुमारोत्पादनं देवकार्यमित्यवसेयम्। अत्रोपमामाह — सम्यक्प्रयोगाद् अपरिक्षतायां नीतौ उत्साहगुणेन संपद् इवेति। अत्र प्रयोगस्य सम्यक्त्वं नाम परात्मनोः प्राबल्यदौर्बल्यादिविवेकपूर्वकत्वम्। यथोक्तं रघुवंशे —

"परात्मनोः परिच्छिद्य शक्त्यादीनां बलाबलम्।
ययावेभि*र्विशिष्टश्चेत् परस्मादास्त सोऽन्यथा ॥"(१७.५९)

इति। सम्यक्प्रयोगाद्धेतोरपरिक्षतायाम् अविहतायां नीतौ सन्ध्यादिप्रयोगे। सन्धिविग्रहयानासनद्वैधीभावसमाश्रयभेदेन षड्विधा या राजनीतिः, सा तत्तदुचिते प्रयुक्ता सती न विहन्यते[2] इति तादृश्यां नीत्यामित्यर्थः। उत्साहगुणेन उत्साहस्य गुणेन। तस्य गुणश्च सम्मोहाभावादिरूपः। असम्मोहसावधानत्वादिलक्षणगुणसामग्रीसहितेनोत्साहेनेत्यर्थः। उत्साह एव गुण उत्साहगुण इति कर्मधारयसमासस्तु गुणशब्दस्य निरुपयोगत्वप्रसङ्गादयुक्तः। सम्पत् समृद्धिरिव। यथा सम्यक्प्रयोगादपरिक्षतायां नीतावुत्साहगुणेन सम्पदुत्पाद्यते, तथा समाधिमत्यां मेनायां भूधराणामधिपेन देवी समुत्पादिताभूदित्यर्थः। अत्र समाधिमत्यामिति मेनाविशेषणं सम्यक्प्रयोगादपरिक्षतायामिति नीतिविशेषणं च परस्परं बिम्बप्रतिबिम्बभावमनुभवतः। देवीसम्पदोः साधारणं

१. 'जन्मभू' ङ. पाठः. २. 'य' ङ. पाठः. ३. 'ते। ता' क. ख. ग. पाठः.

* 'बलिष्ठ' इति मुद्रितरघुवंशपाठः।

विशेषणमाह— भव्येति । भव्या कल्याणी । उपमानोपमेयसाधारणधर्माणामिव-शब्दस्य चोपादानात् पूर्णोपमेयम् । तया चात्र देवीलाभेन मेनाया हिमवतश्च कृतकृत्यता द्योत्यते ॥ २१ ॥

प्रसन्नदिक् पांसुविविक्तवातं
शङ्खस्वनानन्तरपुष्पवृष्टि ।
शरीरिणां स्थावरजङ्गमानां
सुखाय तज्जन्मदिनं बभूव ॥ २२ ॥

(प्रकाशिका)

प्रसन्नदिगिति । विविक्तो रहितः । शङ्खस्वनेति । उत्सवशङ्ख-स्वनं श्रुत्वा देवैर्भक्त्या कृतपुष्पवर्षमित्यर्थः । 'भवो हि लोकाभ्युदयाय तादृशाम्' (रघु. ३. १४) इतिवन्नात्रोपपादनं, तज्जन्मेतिविशेषणबलादेव तदनपेक्षत्वात् । या सर्वस्यात्मभूता, सा हि भगवती जन्मावलम्बते ॥२२॥

( विवरणम् )

इत्थमुत्पन्नाया देव्या जन्मदिनं वर्णयति —

प्रसन्नेति । तज्जन्मदिनं स्थावरजङ्गमानां शरीरिणां सुखाय बभूव । तज्जन्मदिनं तस्याः भगवत्याः जन्मदिनं जननदिवसः स्थावरजङ्गमानां स्थावराणां महीरुहमहीधरप्रभृतीनां जङ्गमानां जरायुजाण्डजस्वेदजभेदेन त्रिविधानां नरतिर्यगादीनां च शरीरिणां सुखायाभूत् । सुखकारणान्याह — प्रसन्नदिगित्यादिना विशेषणत्रयेण । प्रसन्नाः क्रूरातपमेघावरणराहित्यान्मनोहरा दिशो यस्मिंस्तत् । अनेन नेत्रसुखमुक्तम् । त्वगिन्द्रियसुखमाह — पांसुविविक्तवातमिति । मन्दत्वात् पांसुभी रजोभिः विविक्ताः विरहिताः वाता वायवो यस्मिंस्तत् । श्रोत्रेन्द्रियस्य घ्राणेन्द्रियस्य च प्रीतिमाह — शङ्खस्वनानन्तरपुष्पवृष्टीति । शङ्खस्वनस्य शङ्खनादस्यानन्तरं पुष्पवृष्टिः पुष्पवर्षं यस्मिंस्तत् । उत्सवशङ्खस्वनश्रवणानन्तरं भक्त्या देवैः पुष्प-

---

१. 'गण्डजानां' ख. ग. पाठः.

वृष्टिः कृतेत्यवसेयम्। अथवा आदौ देवैर्मङ्गलार्थः शङ्खनादः कृतः। पुनः प्रसादातिशयात् पुष्पवृष्टिरपि कृतेत्यर्थः। आकाशदेशाद् दिव्यकुसुमेषु पतत्सु किमिदमित्यूर्ध्वमवलोकयतां जनानामास्ये दिव्यमकरन्दबिन्दुपतनाज्जिह्वेन्द्रियस्यापि प्रीतिरर्थादनेनैवोक्तेति माधवः। स्थावराणां तु पत्रपुष्पफलादीनां सातिशयोत्पत्तिदर्शनेन सुखं जातमित्यवसेयम्। उक्तञ्च श्रीकृष्णविलासे—

"तद्वंशनालच्युतमच्युतस्य गीतामृतं साधु निषेव्य वृक्षाः।
चिरं जराजर्जरितत्वचोऽपि बाला इवासन् नवपल्लवाढ्याः॥"

इति। अत्र स्थावरजङ्गमानामिति बहुवचनेन हिमवतीत्यादिविशेषानुपादानाच्च तज्जन्माजानतामपि कोऽप्यानन्दातिशयः सञ्जात इत्युक्तं भवति। नात्र कश्चिद् विस्मयः, सर्वात्मिकापि भगवती जन्मावलम्बत इति समर्थनस्य तज्जन्मदिनमित्यनेनैवोक्तत्वादत्र 'भवो हि लोकाभ्युदयाय तादृशाम्' (३. १४) इत्यनेन रघुवंश इवार्थान्तरन्यासो न कृत इत्यवसेयम्॥ २२॥

**तया दुहित्रा सुतरां सवित्री**
**स्फुरत्प्रभामण्डलया चकाशे।**
**विदूरभूमिर्नवमेघशब्दा-**
**दुद्भिन्नया रत्नशलाकयेव॥ २३॥**

(प्रकाशिका)

तयेति। विदूरो नाम पर्वतः। मेघशब्दाद् वैदूर्यमुत्पद्यत इति प्रसिद्धम्। यथाह माघकविः—

"उरगेन्द्रमूर्धरुहरत्नसन्निधेर्मुहुरुन्नतस्य रसितैः पयोमुचः।
अभवन् यदङ्गणभुवः समुल्लसन्नववालवायजमणिस्थलाङ्कुराः॥"
(१३. ५८)

इति॥ २३॥

---

१. 'नुमेय' घ. पाठः.

(विवरणम्)

जातमात्राया देव्या नैसर्गिकीं शरीरसुषमामाह—

तयेति । सवित्री तया दुहित्रा सुतरां चकाशे । सवित्री माता तया दुहित्रा पुत्र्या सुतराम् अत्यर्थं चकाशे शोभते स्म । जातमात्रायामेव देव्यां मातुः पूर्वावस्थातः शोभाधिक्यं जातमित्यर्थः । अत्रोपमामाह — विदूरभूमिः नवमेघशब्दाद् उद्भिन्नया रत्नशलाकयेवेति । विदूरभूमिः विदूरो नाम रत्नोद्भवस्थानभूतः पर्वतविशेषः, यदुद्भूतं रत्नं वैदूर्यमित्युच्यते । तत्स्था भूमिः स्थली नवमेघशब्दाद् नवाद् वर्षादावुद्भूताद् मेघशब्दाद् घनगर्जिताद् उद्भिन्नया स्थलीं भित्त्वोद्गतया रत्नशलाकया शलाकारूपेण रत्नेन, रत्नाङ्कुरेणेत्यर्थः । विदूरभूमेर्मेघशब्दाद् वैदूर्योत्पत्तिः । यदाह भोजः

"अस्ति शैलो विदूराख्यः पर्यन्ते तत्र काचन ।<br>
मही रत्नाकरीभूता वैदूर्यं तत्र जायते ॥<br>
मेघशब्देन जायन्ते तत्र रत्ननवाङ्कुराः ।<br>
क्रमात् परिणतास्ते स्युर्मणयो राजपूजिताः ॥"

इति । उपमानोपमेययोः साधारणं धर्ममाह — स्फुरत्प्रभामण्डलयेति । स्फुरत् शोभमानं प्रभामण्डलं मण्डलाकारा प्रभा यस्यां सा तथा ।

"अरिष्टशय्यां परितो विसारिणा सुजन्मनस्तस्य निजेन तेजसा ।<br>
निशान्तदीपाः सहसा हतत्विषो बभूवुरालेख्यसमर्पिता इव ॥" (३.१५)

इति रघुवंशोक्तः प्रकारोऽनेन दर्शितः ॥ २३ ॥

**दिने दिने सा परिवर्धमाना**<br>
**लब्धोदया चान्द्रमसीव रेखा ।**<br>
**पुपोष लावण्यमयान् विशेषा-**<br>
**ञ्ज्योत्स्नान्तराणीव कलान्तराणि ॥ २४ ॥**

---

१ 'नवमेघ' क. ख. ग. पाठः.

(प्रकाशिका)

दिने दिन इति । लब्ध उदयः सूर्यात् पृथगुपलम्भो यया प्रतिपदि । लावण्यमयान् लावण्योत्तरान् । लावण्यं हि नामावयवसं-स्थानाभिव्यङ्ग्यं[1] निखिलावयवव्यतिरिक्तं किञ्चिदेव तत्त्वान्तरमिति ध्वनिकारः। विशेषान् अवयवान् । 'विशेषोऽवयवे व्यक्तौ पुण्ये शेषविवर्जिते' इत्युत्पलमालायाम् । ज्योत्स्नया अन्तरं व्यवधानं येषामिति विग्रहः । कलान्तराणि कलाविशेषान् । अत्र हलायुधः—

"मध्ये वस्त्रे तथा छिद्रे व्यवधानेऽन्तरात्मनि ।
अवकाशे[2] बहिर्योगे विशेषेऽवयवेऽन्तरम् ॥"

इति । दक्षिणावर्तः — मयटोऽन्तरशब्दस्य चावयवार्थत्वं तु युक्तम् (?) । नन्वत्रैकेनैवेवशब्देन किं न चरितार्थत्वम्, न, प्रतिपदार्थमुपमितिविवक्षणात् । वाक्यार्थोपमाव्यवहारस्त्वीदृशे विषये, वाक्यार्थव्यापित्वात् । ज्योत्स्नालावण्ययोस्तु वृत्त्यन्तर्भावान्नेवशब्दस्तद्विषयः । अर्थतस्तूपमितिः । तदेवमन्वयः— लब्धोदया चान्द्रमसी रेखेव दिने दिने परिवर्धमाना सा ज्योत्स्नान्तराणि कलान्तराणीव लावण्यमयान् विशेषान् पुपोषेति ॥२४॥

(विवरणम्)

उत्पन्नाया देव्याः शरीरपरिपोषानुरूपां लावण्यवृद्धिमाह—

दिने दिन इति । लब्धोदया चान्द्रमसी रेखेव दिने दिने परिवर्धमाना सा ज्योत्स्नान्तराणि कलान्तराणीव लावण्यमयान् विशेषान् पुपोष । लब्धोदया लब्ध उदय आविर्भावः सूर्यात् पृथग्भावश्च यया। अमावास्यायां सूर्यं प्रविष्टस्येन्दोः पूर्वपक्षारम्भे यस्तस्मात् पृथग्भावः, स एवोदयशब्देनोच्यते । यथोक्तं ज्योतिःशास्त्रे —

---

१. 'दि' क. पाठः. २. 'शाने ब' ख. पाठः.

"भानोः समासन्नतया ग्रहाणामदर्शनं यत् तदिहास्तमुक्तम् ।
ततश्च तेषां रविदूरगत्या यद् दर्शनं स्यादुदयं तदाहुः ॥"

इति । चान्द्रमसी चन्द्रमःसम्बन्धिनी । 'हिमांशुश्चन्द्रमाश्चन्द्र' इत्यमरः । रेखा कलेव, प्रतिपच्चन्द्रकलेवेत्यर्थः । दिने दिने अहन्यहनि परिवर्धमाना वर्धनमुपयान्ती सा पार्वती ज्योत्स्नान्तराणि ज्योत्स्नया चन्द्रिकया अन्तरं व्यवधानम् आच्छादनं येषां तानि, ज्योत्स्नामयानीत्यर्थः । कलान्तराणि कलारूपानवयवानिव ।

"मध्ये वस्त्रे तथा छिद्रे व्यवधानेऽन्तरात्मनि ।
अवकाशे बहिर्योगे विशेषेऽवयवेऽन्तरम् ॥"

इति हलायुधः । लावण्यमयान् लावण्योत्तरान् । प्राचुर्यार्थे मयट् । विशेषान् अवयवान् । 'विशेषोऽवयवे व्यक्तौ' इत्युत्पलमाला । पुपोष प्राप । यथा पूर्वपक्षप्रतिपदुदिता शशिकला प्रतिदिनमधिकाधिकज्योत्स्नान् कलारूपानवयवान् प्राप्नोति, तथेयमपि जन्मलाभानन्तरमनुदिनं लावण्यप्रचुरानवयवानुपलेभ इत्यर्थः । अवयवसंस्थानविशेषाभिव्यङ्ग्यं निखिलावयवेभ्यो व्यतिरिक्तं यत्किञ्चित् तत्त्वान्तरं लावण्यमिति ध्वनिकारः । अत्र प्रतिपदार्थमुपमितेर्विवक्षणादिवशब्दद्वयोपादानमिति द्रष्टव्यम् । ज्योत्स्नालावण्ययोस्तूपमानोपमेयभावे सत्यपि तयोः समासान्तर्भावात् तत्रेवशब्दो न प्रयुक्तः ॥ २४ ॥

**तां पार्वतीत्याभिजनेन नाम्ना**
**बन्धुप्रियां बन्धुजनो जुहाव ।**
**उ मेति मात्रा तपसो निषिद्धा**
**पश्चादुमाख्यां सुमुखी जगाम ॥ २५ ॥**

(प्रकाशिका)

**तां पार्वतीति** । आभिजनेनाभिजननिमित्तेन । **जुहाव** आकारित-

वान्। उ इति तपोवाचकमव्ययम्। मा निषेधे। तपसे मा भवेति निषिद्धेत्यर्थः ॥ २५ ॥

(विवरणम्)

नामकरणप्रकारमाह—

तामिति। बन्धुजनः ताम् आभिजनेन नाम्ना पार्वतीति जुहाव। बन्धुजनः महामेरुप्रभृतयो बन्धवः तां गौरीम् आभिजनेन अभिजन आभिजात्यं तन्निमित्तम् आभिजनम् आभिजात्यनिमित्तेन नाम्नेत्यर्थः। जुहाव ह्वेञ् स्पर्धायां शब्दे च' इत्यस्माद्धातोर्लिटि रूपम्। धातूनामुपसर्गेण येऽर्थाः प्रतीयन्ते ते सर्वेऽपि तेषां स्वार्था एव। उपसर्गाणां पुनरभिव्यञ्जकत्वम्। यदाह माघः— धातुलीनमुपसर्ग इवार्थम् (१०. १५) इति। तस्माद् युक्त एवात्रोपसर्गेण विनापि प्रयोगः। देवतात्मकत्वादभिजनसम्पन्नस्य पर्वतस्यापत्यामिति व्युत्पत्त्या बन्धवस्तां पार्वतीत्याहूतवन्त इत्यर्थः। बन्धुजनस्य तद्विषयां प्रीतिमाह—बन्धुप्रियामिति। बन्धूनां प्रियामिष्टाम्। अनेनाह्वाने तेषामादरातिशयो द्योत्यते। एवं नामान्तराण्यपि सञ्जातानीति दर्शयन्नाह— सुमुखी मात्रा उ मा इति तपसः निषिद्धा पश्चाद् उमाख्यां जगाम। शोभनं मुखं यस्याः सा सुमुखी। अनेन स्मितपूर्वभाषित्वादिरूपो महागुणो दर्शितः। मात्रा मेनया उशब्दस्तपोवाचकमव्ययम्। 'उ तापेऽव्ययमीशे ना' इति यादवः। माशब्दो निषेधवाचकमव्ययम्। 'मास्म मालं च वारण' इत्यमरः। तपो मा भवेदिति तपसः सकाशान्निषिद्धा वारिता सती पश्चात् तपश्चरणारम्भकाले उमाख्याम् उमेत्याख्यां च जगाम प्राप्तवती। मृदुशरीरा कठिनतरं तपः कर्तुकामा रोगभीतया जनन्या 'मनीषितायार्च' (५. ४) इत्यादिवक्ष्यमाणप्रकारेण तपसः सकाशान्निषिद्धा सती सा पश्चादुमेति नाम च जगामेत्यर्थः। एवं देव्या गुणकर्मानुरूपाणि नामान्तराण्यपि बभूवुरिति भावः ॥ २५ ॥

---

१. 'बान्धवाः तां' ख. पाठः. २. 'नस्य' क. ख. ग. पाठः.

महीभृतः पुत्रवतोऽपि दृष्टि-
स्तस्मिन्नपत्ये न जगाम तृप्तिम्।
अनन्तपुष्पस्य मधोर्हि चूते
द्विरेफमाला सविशेषसङ्गा ॥ २६ ॥

(प्रकाशिका)

**महीभृत** इति। अत्र पर्यायप्रक्रमभङ्गदोषं पश्यन् काव्यप्रकाशकृदुक्तवान्— अपत्यवतोऽपीति युक्तम्। अत्र सत्यपि पुत्रे कन्यारूपेऽपत्ये सस्नेहोऽभूदिति केचित् समर्थयन्ते इति। तस्य चान्यदीयं समर्थनमपि नानुमतम्। अनुमतत्वे पाठान्तरं न दद्यात्। दत्त्वा वा यद्वेत्यादि विकल्पवाचि पदमनन्तरवाक्ये प्रयुञ्जीत। न च केचिदित्येकीयमतत्वेन निर्दिशेत्। युक्तं चैतत्। तथाहि — प्रतिवस्त्वलङ्कारे दृष्टान्तदार्ष्टान्तिकयोर्वाक्यार्थयोर्बिम्बप्रतिबिम्बभावेन भाव्यम्। अन्यथा तद्भावासंभवात् तदसम्भवे च भवत्येकवाक्यता न स्यात्। एवं स्थितेऽत्र दृष्टान्ते पुष्पशब्देन सामान्यवाचिनोपक्रमे चूतशब्देन विशेषवाचिनोपसंहारः। दार्ष्टान्तिके पुत्रशब्देन विशेषवाचिनोपक्रमे अपत्यशब्देन सामान्यवाचिनोपसंहारः, सर्वनामवशाद्वा विशेषान्तरवाचिनोपसंहारः। ततश्च न बिम्बप्रतिबिम्बभाव इति। ननु—

"आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियान्त्वमी।
आहुर्दुहितरं सर्वेऽपत्यं तोकं तयोः समे॥"

इत्यमरसिंहवचनाद् विशेषवाचिनः पुत्रशब्दस्य कथमपत्यपर्यायत्वम्। भिन्नव्युत्पत्तिनिमित्तयोः प्रवृत्तिनिमित्तैक्ये हि पर्यायत्वम्। नैवम्। सामान्यवाच्यपि पुत्रशब्दोऽस्ति। तथाश्वलायनगृह्ये दर्शनाद् 'यदि कामयेत पुमांस

---

१. 'भेददो' ख. पाठः. २. 'पेऽप्यप' ख. पाठः. ३. 'न्ति' ख. पाठः. ४. 'य' ख. पाठः. ५. 'वाक्यैक' ख. पाठः. ६. 'येत पु' ख. पाठः.

एव मे पुत्रा जायेरन्नि'ति । एवञ्च सामान्यविशेषरूपोभयार्थवाचिनः पुत्रशब्दस्य सामान्यार्थत्वे पर्यायप्रक्रमभङ्गः । तत्परिहाराय तु विशेषार्थत्वे वाक्यार्थयोरनन्वयः । तत्रानन्वयात् पर्यायप्रक्रमभेदो वरम् । तदपेक्षयाल्पदोषत्वात् । महाकविप्रयोगे चासंभावनीयस्तादृशो वाक्यार्थदोषः । न हि मन्दचक्षुरपि पुरःस्थं द्विरदवरं न पश्येत्, किमुत चक्षुष्मान् । अनयैव खलु युक्त्या व्यक्तिविवेककाव्यप्रकाशकारौ महामती प्रक्रमभेदमेवाङ्गीचक्रतुः ॥ २६ ॥

(विवरणम्)

पितुस्तस्यां स्नेहातिशयमाह—

महीभृत इति । महीभृतः दृष्टिः तस्मिन् अपत्ये तृप्तिं न जगाम । महीभृतो हिमवतः दृष्टिर्नेत्रद्वयी तस्मिन् पार्वतीरूपे अपत्ये ।

"आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियान्त्वमी ।
आहुर्दुहितरं सर्वेऽपत्यं तोकं तयोः समे ॥"

इत्यमरः । तृप्तिम् अलम्भावं न जगाम न प्राप्ताभूत् । हिमवतो दृष्टिः पार्वत्यामेव सस्पृहं सक्ताभूदित्यर्थः । ननु किमपत्यान्तरराहित्यं तत्र हेतुः, नेत्याह — पुत्रवतोऽपीति । स्त्रीरूपे पुरुषरूपे चापत्यान्तरे सत्यपीत्यर्थः । तत्र स्त्रीरूपमपत्यान्तरं गङ्गा । तदुक्तं श्रीकृष्णविलासे —

"अधीशितुः सानुमताममुष्य कः स्तोतुमीष्टे कमलाक्ष! कन्ये ।
ययोः स देवः स्मरशत्रुरेकां धत्ते जटायामपरां शरीरे ॥"

इति । सामान्यवाच्यपि पुत्रशब्दोऽस्ति । तदुक्तमाश्वलायनगृह्ये 'यदि कामयते पुमांस एव मे पुत्रा जायेरन्' (१. ७. ३) इति । अत्र प्रतिवस्तूपमामाह —अनन्तपुष्पस्य मधोः द्विरेफमाला चूते सविशेषसङ्गा हीति ।

---

१. 'द्' न' ख. पाठः.

अनन्तानि निरवधिकानि पुष्पाणि कमलादीनि यस्य, तस्य मधोर्वसन्तस्य द्विरेफमाला भ्रमरसन्ततिः चूते सहकारकुसुमे सविशेषसङ्गा सविशेषं विशेषसहितं यथा भवति तथा सङ्गः सक्तिर्यस्याः सा तथा। हिशब्दः प्रसिद्धौ। उक्तञ्च रघुवंशे 'न हि प्रफुल्लं सहकारमेत्य वृक्षान्तरं काङ्क्षति षट्पदाली' (६. ६९) इति। अत्र महीभृद्वसन्तौ दृष्टिद्विरेफमाले पुत्रान्तरपुष्पान्तराणि पार्वतीरूपापत्यचूतकुसुमे च परस्परं बिम्बप्रतिबिम्बभावमनुभवन्ति। अत एव पुत्रशब्दः 'आत्मजस्तनयः सूनुरि'त्याद्यमरसिंहवचनमतिक्रम्याश्वलायनमतेन सामान्यवाचित्वेन व्याख्यातः। अन्यथा सामान्यवाचिनः पुष्पशब्दस्यैतत्प्रतिबिम्बत्वाभावप्रसङ्गात्। बिम्बप्रतिबिम्बभावाभावे च प्रतिवस्तुत्वमपि विरुध्यत एव। प्रतिवस्तुत्वाभावे पुनरेकवाक्यता न स्यादित्यलमनेन। यत् पुनरत्र पुत्रवतोऽपीत्युपक्रम्य पर्यायान्तरेणापत्यशब्देनोपसंहार इति पर्यायप्रक्रमभेददोष इति, तत्तु महाकविप्रयोगस्य महनीयगुणान्तरास्पदत्वात् सहनीयम्। यत्तु पर्यायप्रक्रमभेदभयाद् महीभृतोऽपत्यवतोऽपीति पाठान्तरं दत्तं, तदपि तादृशगुणाभावादेवोपेक्षणीयम्। अत्रात्यासङ्गः साधारणो धर्मः शब्दभेदेन वाक्यद्वयेऽप्युपात्त इति प्रतिवस्तूपमालङ्कारः। वाक्यार्थगतत्वेन सामान्यस्य वाक्यद्वये पृथङ्निर्देशे प्रतिवस्तूपमेति। नात्रार्थान्तरन्यासत्वं शङ्कनीयं, सामान्यविशेषभावाभावात्। नापि दृष्टान्तालङ्कारत्वं, साधारणधर्मस्यापि बिम्बप्रतिबिम्बभावाभावात्॥ २६॥

प्रभामहत्या शिखयेव दीप-<br>
स्त्रिमार्गयेव त्रिदिवस्य मार्गः।<br>
संस्कारवत्येव गिरा मनीषी<br>
तया स पूतश्च विभूषितश्च॥ २७॥

(प्रकाशिका)

प्रभेति। दीपो नाम स्निग्धवर्त्यादिगतो वह्निः। शिखा तु तस्य

१. 'पात्स्पं' क. ख. ग. पाठः.

क्षणनश्वरोऽवयवप्रसरः । त्रिदिवस्य मार्ग आकाशः । संस्कारवत्या लक्षणानुसारिण्या । दीपस्य पूतत्वमवतमसमे[1]लनाभावः । आकाशस्य तच्छीकरादिसम्पर्कात् तत्रत्यानां दुरितक्षयः । मनीषिणः पुण्यलाभः । तदुक्तम्—'एकः शब्दः सम्यग् ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके कामधुग् भवती'ति । महीभृतस्त्वनुग्रहोन्मुखया तया मलमायाकर्मतत्कार्याणां दग्धप्रायता । विभूषितत्वं तु सर्वत्र जनितशोभत्वम् । अत्र व्यङ्ग्येनापि केनचित् साधारणधर्मेण प्रत्युपमानं भिन्नेनावश्यं भवितव्यमिति केचिन्मन्वते । न तदलङ्कारकृतामनुमतम् । अनुमतं चेन्मालोपमाप्रस्तावेऽभिदध्युः । ते तु प्रत्युतास्या अभिन्नभिन्नधर्मत्वेन द्वैविध्यमूचुः ।

"अधनस्येव दातृत्वं क्लीबस्येवास्त्रकौशलम् ।
अज्ञस्येव प्रगल्भत्वमकवेः शास्त्रवेदनम् ॥"

इत्यत्र त्वश्रूयमाणत्वात् साधारणधर्मस्याक्षेपे कर्तव्ये औचित्यादनेक आक्षिप्यते, न तु व्यज्यते । यत्र तु महाकविप्रयोगे क्वचिद् व्यङ्ग्येनापि भू[2]येत तत्राधिकं चारुत्वमस्तु । न त्वेतावता तन्नियमः । न चैकस्मिन्नुपमान उपात्ते उपमानान्तरवैयर्थ्यशङ्कया व्यङ्ग्यधर्मभेदो मृग्यः । उपमानान्तरस्य सौन्दर्यातिशयहेतुत्वात् । यथालङ्कारान्तरस्य चन्द्र इव वदनकमलमस्या इति ॥ २७ ॥

( विवरणम् )

अथानुग्रहोन्मुखया भगवत्या हिमाचलस्य मायातत्कार्याणां दग्धप्रायत्वं जनितशोभत्वं चाह—

प्रभेति । सः तया पूतश्च विभूषितश्च । सः हिमवान् तया निजानुग्रहार्थमेव निजपुत्रीत्वमनुभवन्त्या देव्या पूतः संसारप्रवर्तकाज्ञानविनाशनवशाद्वि-

---

१. 'भि' ख. पाठः. २. 'यते' ख. पाठ.. ३. 'या थ' ख. पाठः.

शुद्धान्तःकरणः विभूषितः इतस्ततः सञ्चरन्त्या तया जनितशोभश्च बभूवेति शेषः । अत्रोपमात्रयमाह — प्रभेत्यादि । दीपः प्रभामहत्या शिखयेव । स्निग्धवर्त्यादिद्रव्यवर्ती वह्निर्दीप इत्युच्यते । प्रदीपात् प्रतिक्षणमुद्गच्छन्नालोकप्रसरः शिखेत्युच्यते । प्रभया शोभया महती प्रभामहती । यथा दीपः प्रभामहत्या शिखया पूतश्च विभूषितश्च भवति, तथायमपि तयेत्यर्थः । शिखया दीपस्य पूतत्वं तमोनभिभवनीयत्वं, विभूषितत्वं तु स्पष्टमेव । अनेनोपमानेन लोकान्तरेऽप्यज्ञानाभिभवो न भविष्यतीति द्योत्यते । उपमानान्तरमाह— त्रिदिवस्य मार्गः त्रिमार्गया इव । त्रिदिवस्य मार्ग आकाशः । पातालभूतलाकाशवाहिनीत्वात् त्रयो मार्गा यस्याः सा त्रिमार्गा गङ्गा । आकाशस्य गङ्गया पूतत्वं तच्छीकरादिसम्पर्कात् तत्रत्यानां दुरितनिवृत्तिः । विभूषितत्वं दर्शनीयत्वम् । अनेनोपमानेन हिमवतः समीपवर्तिनामपि जनानां शुद्धिर्दर्शिता । उपमानान्तरमप्याह— मनीषी संस्कारवत्या गिरेवेति । मनीषी विद्वान् संस्कारवत्या व्याकरणादिलक्षणानुसारिण्या गिरा वाचेव । अत्र मनीषिणः पूतत्वं सुकृतलाभः । तदुक्तं —

"यस्तु प्रयुङ्क्ते कुशलो विशेषे शब्दान् यथावद् व्यवहारकाले ।
सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद् दुष्यति चापशब्दैः ॥"

इति । विभूषितत्वं जनबहुमानास्पदत्वम् । अनेनोपमानेन हिमवतः पङ्क्तिपावनत्वं द्योत्यते । अत्र मनुः —

"यश्च व्याकुरुते वाचं यश्च मीमांसतेऽध्वरम् ।
तावुभौ पुण्यकर्माणौ पङ्क्तिपावनपावनौ ॥"

इति ॥ २७ ॥

**मन्दाकिनीसैकतवेदिकाभिः**
**सा कन्दुकैः कृत्रिमपुत्रकैश्च ।**
**रेमे मुहुर्मध्यगता सखीनां**
**क्रीडारसं[1] निर्विशतीव बाल्यम्[2] ॥ २८ ॥**

---

१. 'सं नि', २. 'ल्ये' इति मुद्रितकोशपाठः.

(प्रकाशिका)

मन्दाकिनीति । क्रीडारसादिति पाठः । निर्विशतीति हेत्वर्थे शता। यथा राजानमाराधयन् धनं विन्देतेति । यथा क्रीडारसहेतुकमस्या बाल्यग्रहणं तद्धेतुकं च रमणमित्युत्प्रेक्ष्यते, तथा सातिशयं रेम इत्यर्थः । ननु बाल्यग्रहणस्य रमणे हेतुत्वं नोत्प्रेक्ष्यं, वास्तवत्वात् । न । क्रीडारसहेतुकस्य तस्य तदसिद्धेः । लोकानुजिघृक्षया हि सर्वो व्यापारो भगवत्याः । तर्हि तदेवोत्प्रेक्ष्यं, न तु बाल्यग्रहणस्य रमणे हेतुत्वमपि । नैवम्। बाल्यग्रहणस्यैवासिद्धायमानत्वात् । यथा विधिवाक्ये चारेण पश्येदित्यादौ प्रधानभूतदर्शनादिक्रियाभिनिर्वर्तकस्वक्रियाभिसंबन्धाच्चारादेः साध्यायमानता, तथेहाप्यसिद्धक्रीडारसहेतुकत्वान्वयाद् बाल्यग्रहणस्यासिद्धायमानता । तत्र च यथा चारादेः करणत्वादिमात्रं विधेयं, तथात्र बाल्यग्रहणस्य हेतुत्वमात्रम् । यथा च प्रमाणान्तरसिद्धत्वाद् दर्शनादेर्न विधेयत्वं, तथा प्रकृतत्वाद् रमणस्य नोत्प्रेक्ष्यत्वम्। न चानैकान्तिकः प्रकृतत्वहेतुः । प्रकृतस्य ह्यतिशयाधानाय तत्राप्रकृतमुत्प्रेक्ष्यते । प्रकृतं तु तस्य विषयत्वेनावतिष्ठते । तस्येहोत्प्रेक्ष्यत्वे मिथ्यात्वमनलङ्कारत्वं च स्यात्। अलङ्कारान्तरेष्वप्ययं न्यायोऽनुसन्धेयः। तर्हि 'त्वन्मुखमिव कमलमि'त्यत्र कथं प्रकृतस्योपमानत्वम् । न तत्रोपमानत्वं वास्तवम् । इह तूत्प्रेक्ष्यत्वं वास्तवमेवेति विशेषः । एवञ्चोक्तन्यायेन रमणस्याप्यसिद्धायमानत्वं स्यादिति चोद्यमपि परिहृतम् । अथवा क्रीडारसहेतुकत्वविशिष्टस्य बाल्यग्रहणस्यासिद्धत्वं, यथा 'कपालेनोन्मुक्तः स्फटिकधवलेनाङ्कुर इवे'त्यत्र कपालोन्मुक्तत्वविशिष्टस्याङ्कुरस्य। क्रीडारसमिति पाठे क्रीडया क्रीडारसेन रसो यत्रेति विग्रहेऽप्ययमेवार्थनिर्वाहः* ॥ २८ ॥

---

* अत्रापि पाठे बाल्यशब्दस्य द्वितीयान्ततैव ।

( विवरणम् )

क्रमेण सम्पन्नबाल्यावस्थाया देव्याः क्रीडाप्रकारानाह—

मन्दाकिनीति। सा सखीनां मध्यगता मन्दाकिनीसैकतवेदिकाभिः कन्दुकैः कृत्रिमपुत्रकैश्च मुहुः रेमे। सा पार्वती सखीनां मध्यं मध्यभागं गता सती। अनेन सखीनां तद्दर्शनमात्रकौतुकं ध्वनितम्। मन्दाकिनीसैकतवेदिकाभिः मन्दाकिन्या गङ्गायाः सैकते पुलिने। 'तोयोत्थितं तत् पुलिनं सैकतं सिकतामयमि'त्यमरः। या वेदिकाः कौतुकात् स्वेनैव रचिता इत्यर्थात् सिध्यति। ताभिः मन्दाकिनीतटे स्वेनैव रचितैः सिकतासन्निवेशमयैः मण्डपविशेषैरित्यर्थः। कन्दुकैः कन्दुकाघातैः कृत्रिमपुत्रकैः कृत्रिमैः करणनिर्वृत्तैः पुत्रकैः। अल्पार्थे कः। बालपुत्रैः पुत्रत्वेन कल्पितैर्दारुविशेषैरित्यर्थः। मुहुः पुनःपुनः, अनवरतमित्यर्थः। भृशार्थे वा मुहुश्शब्दः। चकारोऽनुक्तानामपि समुच्चयार्थः। अनुक्ताश्च तेऽर्था बालस्वभावादेवावसेयाः। रेमे चिक्रीड। 'रमु क्रीडायाम्' इति धातुः। इत्थं देव्याः सखीभिः सह सतत्ं विहितायां क्रीडायां हेतुमुत्प्रेक्षते—क्रीडारसाद् बाल्यं निर्विशतीवेति। क्रीडारसात् क्रीडायां यो रसः रागः, तस्माद्धेतोः बाल्यं बालभावं निर्विशती अनुभवन्ती सतीव। निर्विशतीति हेतौ शता। क्रीडारसादेव बाल्यमवलम्ब्यावस्थितत्वादिवेत्यर्थः। 'कृष्णमाराधयन्नपवर्गं लभत' इतिवत्। अत्रातिमहत्येवंविधे रमणे बाल्यानुभवरूपो हेतुरुत्प्रेक्ष्यते, बाल्यानुभवे च क्रीडारस इति विवेकः। यथा नित्याया भगवत्याः क्रीडारसहेतुकं बाल्यग्रहणं, बाल्यग्रहणहेतुकं च रमणमित्युत्प्रेक्ष्यते, तथा सातिशयं रेम इत्यर्थः। जगदुपकृतिमात्रव्यापाराया देव्या बाल्यग्रहणादिव लोकोत्तरं रमणमित्येकोत्प्रेक्षा, क्रीडारसादिव बाल्यग्रहणमित्यन्या ॥ २८ ॥

**तां हंसमालाः शरदीव गङ्गां**
**महौषधिं नक्तमिवात्मभासः।**

स्थिरोपदेशामुपदेशकाले
प्रपेदिरे प्राक्तनजन्मविद्याः ॥ २९ ॥

(प्रकाशिका)

तामिति । स्थिरो वासनारूपेण उपदेशः पूर्वजन्मकृतो यस्याः । उपदेश आचार्यैः कृतः, तस्य काले यौवनादर्वाचि वयसि । यदाह मुनिः 'प्राग् यौवनाद् युवतिरि'ति । न च विद्यासु स्त्रिया नाधिकारः । तस्यापि मुनिना समर्थितत्वात् । अत्र स्थिरोपदेशामिति उपदेशकाल इति च विद्याविनयस्य स्वाभाविकः कृतकश्चेति यावंशावुक्तौ, तयोः प्रत्येकं प्रतिबिम्बनायोपमानद्वयं दत्तमित्यवसेयम् । आचार्याणामनतियत्नश्च द्योत्यते॥२९॥

( विवरणम् )

अथ देव्या विद्याग्रहणप्रकारमाह—

तामिति । प्राक्तनजन्मविद्याः उपदेशकाले तां प्रपेदिरे । प्राक्तनजन्मविद्याः प्राक्तने प्राचीने जन्मनि दक्षसुतात्वावस्थायां या विद्यास्ताः सर्वा अपि उपदेशकाले आचार्यैः क्रियमाणस्योपदेशस्य काले समये । स च यौवनोत्पत्तेः पूर्वकालः । यदाह मुनिः 'प्राग् यौवनाद् युवतिरि'ति । विद्यां ग्राहयितव्येति शेषः । तां पार्वतीं प्रपेदिरे संप्रापुः । प्राक्तनजन्मविद्याः आचार्योपदेशमात्रं निमित्तीकृत्य देवीं प्रतिपेदिर इत्यर्थः । तत्र हेतुमाह— स्थिरोपदेशामिति । स्थिराः वासनारूपेण पूर्वमेव वर्तमानाः उपदेशाः पूर्वजन्मकृताः यस्यां, ताम् । अनेन स्वाभाविको विद्याविनय उक्तः, उपदेशकाल इत्यनेन कृतकः । द्विविधो विद्याविनयः । यदाह विष्णुगुप्तः— 'कृतकः स्वाभाविकश्च विनयः' (कौटि. अर्थ. १. ५. २) इति । तत्र कृतके विद्याविनये प्रथममुपमानं दर्शयति—हंसमालाः शरदि गङ्गामिवेति । हंसमालाः हंसपङ्क्तयः शरदि शरत्काले गङ्गामिव । हंसानां वर्षासु मानसे स्थितिः,

पुनश्च शरदारम्भे स्वाभिमतेषु भागीरथीप्रदेशादिष्विति प्रसिद्धिः। स्वाभाविके विद्याविनयेऽप्युपमानमाह — आत्मभासः नक्तं महौषधिमिवेति। आत्मभासः दिवसेषु सूर्यप्रभाभिभूता निजा एव भासः प्रभाः। नक्तमिति रात्रिवाचकमव्ययम्। 'दोषा च नक्तं च रजनौ' इत्यमरः। महौषधिं रात्रावुज्ज्वलं वृक्षविशेषमिव। यथा सूर्यप्रभाभिभूता निजा एव प्रभाः सूर्यप्रभातिरोभावे महौषधिं प्राप्नुवन्ति, तथा बाल्यादप्रकाशमाना वासनारूपेण पूर्वमपि विद्यमाना विद्यास्तामपीत्यर्थः। अत्रोपमाद्वयेनाचार्याणामनतिप्रयासो व्यज्यते॥२९॥

असंभृतं मण्डनमङ्गयष्टे-
रनासवाख्यं करणं मदस्य।
कामस्य पुष्पव्यतिरिक्तमस्त्रं
बाल्यात् परं साथ वयः प्रपेदे॥ ३०॥

(प्रकाशिका)

असंभृतमिति। असंभृतमसंपादितं मण्डनमलङ्क्रियासाधनम्। अनासवाख्यं आसवत्वशून्यमित्यर्थः। अस्त्रं जयसाधनम्। अथानन्तरं, कालक्रमेणेत्यर्थः। अत्र संभृतत्वादिर्मण्डनादेः प्रसिद्धो हेतुर्व्यावर्त्यते, हेत्वन्तरं च स्तनोद्भेदधातूपचयलावण्यलक्ष्मीलाभादिर्विभाव्यत इति विभावनात्रालङ्कार इति भोजः। कश्चित् तु विभावनायाममुं श्लोकमुदाहृत्य 'अत्र द्वितीये पादे मदस्य प्रसिद्धं यदासवाख्यं करणं तदभावेऽपि यौवनहेतुकत्वेनोपनिबन्धः कृत' इति योजनां कृत्वा 'असंभृतं मण्डनमिति कामस्य पुष्पव्यतिरिक्तमस्त्रमिति चात्र विवदन्ते—इयमेव विभावनेति केचित्। संभरणस्य पुष्पाणां च मण्डनमस्त्रं च प्रत्यकारणत्वाद् ‡वार्तमेतद्' इति पादद्वये विभावनां निराकृतवान्। तत्र च रूपकमुत्कटत्वेन प्रतीयते॥ ३०॥

---

१. 'का' ख. पाठः. २. 'व्यर्थमे' ङ. पाठः. ३. 'तमात्रमे' क. पाठः.

---

‡ वार्तं निस्सारम्।

(विवरणम्)

अथ यौवनावस्थां वर्णयितुमुपक्रमते—

असम्भृतमिति । अथ सा बाल्यात् परं वयः प्रपेदे । अथ विद्याग्रहणानन्तरं, कालक्रमेणेत्यर्थः । सा यौवनारम्भात् पूर्वमपि लोकोत्तरशरीरलावण्या पार्वती । अनेन शरीरसामान्यमपि यौवनारम्भे मनोहरं भवति, किं पुनः शरीरविशेष इति दर्शितम् । तेन च वक्ष्यमाणानां गुणानामुपपत्तिर्ध्वन्यते । बाल्यात् परं वयः यौवनं प्रपेदे प्राप्तवती । कीदृशं पुनस्तदित्यत्राह — असम्भृतमित्यादिना विशेषणत्रयेण । तत्रादौ नेत्रानन्दकरत्वमाह— अङ्गयष्टेः असम्भृतं मण्डनमिति । अङ्गयष्टेः प्रशस्ताङ्गस्य, 'हस्तयष्टिलतादयः प्रशंसावचना' इत्युक्तत्वात् । अत्राङ्गविशेषानुपादानादस्य सर्वाङ्गीणत्वमुक्तम् । असम्भृतम् असम्पादितं मण्डनम् अलङ्क्रियासाधनम् । अप्रयाससाध्यं नयनानन्दजनकमलङ्कारसाधनमित्यर्थः । शरीरशोभापादनद्वारा नयनानन्दकारित्वं मण्डनत्वरूपणे हेतुः । दर्शनानन्तरभवस्य चित्तविकारस्यापि हेतुत्वमाह— मदस्य अनासवाख्यं करणमिति । मदस्य अन्तःकरणविभ्रमस्य । 'सम्मोहानन्दसम्भेदो मदिरादिकृतो मदः' इति भोजः । अनासवाख्यम् आसवो मद्यम् । आसव इत्याख्या यस्य नास्ति तदनासवाख्यम् । करणं साधकतमम्[1] । 'करणं साधकतमे क्षेत्रगात्रेन्द्रियेष्वपि' इति सिंहः । आसवे[2]व्यतिरिक्तं मदकारणमित्यर्थः । अनेन मदकरेभ्यो द्रव्यान्तरेभ्यो व्यतिरेक उक्तः । मनोहरवस्तुदर्शनं मदकारणमित्युक्तं रघुवंशे 'अमदयन् सहकारलता मनः सकलिकाः कलिकामजितामपि' (९. ३३) इति, 'किसलयप्रसवोऽपि विलासिनां मदयिता दयिताश्रवणार्पितः' (९. २८) इति च । चित्तविकारानन्तरभवस्य कामविकारस्यापि हेतुत्वमाह— कामस्य पुष्पव्यतिरिक्तम् अस्त्रमिति । कामस्य मदनस्य पुष्पव्यतिरिक्तं पुष्पाद् व्यतिरिक्तं पुष्पादन्यत् पुष्पादत्यन्तोत्कृष्टमिति च प्रतीयते । 'व्यतिरिक्तः समधिक' इत्यमरः । अस्त्रं

---

१. 'मम्, आ' घ. पाठः. २. 'वत्वव्य' घ. पाठः.

जयसाधनम् । अथास्यैव श्लोकस्यापरा व्याख्या—बाल्यात् परं साथ वयः प्रपेदे इत्यत्र नार्थलाभः । यौवनस्य नैसर्गिकं शरीरशोभाहेतुत्वमाह—अङ्गयष्टेरसम्भृतं मण्डनमिति । अत्र यौवनस्य मण्डनत्वरूपणेन मण्डनवच्छोभाहेतुत्वमुक्तम् । तेन च देव्याः शरीरे तद्धेतुः कोऽपि शोभाविशेषो जात इति व्यज्यते । सविलासगमनादिनिदानभूतस्य मदस्यापि हेतुत्वमाह— मदस्य अनासवाख्यं करणमिति । यौवनस्य मदकारणत्वं प्रसिद्धम् । यथोक्तम् "उपदिशति कामिनीनां यौवनमद एव ललितानि" इति । विशेषणद्वयेनोक्तस्यार्थस्य फलमाह — कामस्य पुष्पव्यतिरिक्तमस्त्रमिति । मदनस्य त्रैलोक्यजयसाधनमित्यर्थः । केचित् तु देवीजयस्यैव साधनमिति व्याचक्षते । अस्य श्लोकस्यालङ्कारनिर्णये भोजराजप्रभृतिभिरनेकधा विवादः कृतः । सर्वत्र विभावनेति भोजराजः । द्वितीयपाद एव विभावनेति मङ्खुकः । वामनः पुनः 'एकगुणहानिकल्पनायां साम्यदार्ढ्यं विशेषोक्तिः' इति लक्षणमाश्रित्य विशेषोक्तिरलङ्कार इत्युक्तवान् । यौवनस्य मण्डनत्वादिरूपणाद् रूपकालङ्कार एव स्फुटः । सव्यतिरेकं चेदं रूपकमित्यस्मद्गुरोरुपदेशः ॥ ३० ॥

उन्मीलितं तूलिकयेव चित्रं
सूर्यांशुभिर्भिन्नमिवारविन्दम् ।
बभूव तस्याश्चतुरश्रशोभं[1]
वपुर्विभक्तं नवयौवनेन ॥ ३१ ॥

(प्रकाशिका)

उन्मीलितमिति । उन्मीलितं स्फुटीकृतम् । तूलिकया चित्रलेखनशलाकया । भिन्नं विकासितम् । चतुरश्रा शोभा यस्य । चतुरश्रशब्दोऽयं निरूढलक्षणया समग्रार्थः । चतुरश्रशोभीति पाठे[2] चतु-

---

१. 'भि' मुद्रितकोशपाठः. २. 'ठः' ख. पाठः.

रश्रं शोभितुं शीलमस्येति णिनिरिति वामनः । विभक्तं व्यक्तीकृतस्तनजघनादिसंस्थानमित्यर्थः । तूलिकयोन्मीलितं चित्रमिव सूर्यांशुभिर्भिन्नमरविन्दमिव च नवयौवनेन विभक्तं तस्या वपुश्चतुरश्रशोभं बभूवेत्यन्वयः । अत्रोन्मीलितभिन्नत्वे विभक्तत्वं च दृष्टान्तालङ्कारवदन्योन्यं बिम्बप्रतिबिम्बभावेन स्थितानि यथास्वं धर्मिणि साधारणधर्मभूतस्य चतुरश्रशोभत्वस्य हेतवः । प्रथमेनोपमानेन सातिशयचमत्कारहेतुत्वं द्वितीयेन तु विशिष्टोपयोगयोग्यत्वं च वपुषः प्रत्याय्यते । नवशब्देन त्वापातत[1] एवेदृशकार्यकारि यौवनं लब्धप्रतिष्ठत्वे किं किं न कुर्यादिति द्योत्यते । ननु लिङ्गवचनकालभेददोषाः कथमत्र न स्युः । उच्यते । दुष्टताहेतोः साधारणधर्मभेदस्याभावादाद्ययोर्न दुष्टत्वम् । तृतीयस्तु कविप्रभावेन निराक्रियते ॥ ३१ ॥

( विवरणम् )

तादृशावस्थायास्तस्याः शरीरसुषमां वर्णयति—

उन्मीलितमिति । नवयौवनेन विभक्तं तस्या वपुस्तूलिकया उन्मीलितं चित्रमिव सूर्यांशुभिर्भिन्नमरविन्दमिव चतुरश्रशोभं बभूव । नवयौवनेन नवेन यौवनेन । अत्र नवशब्देन यौवनमिदमारम्भावस्थायामेवैतादृशं कार्यं चकार, लब्धप्रतिष्ठं पुनः किं किं न कुर्यादिति द्योत्यते । विभक्तं कृतविभागं, व्यक्तीकृतस्तनजघनाद्यवयवसंस्थानमित्यर्थः । तस्याः पार्वत्या वपुः शरीरं तूलिकया चित्रलेखनशलाकया उन्मीलितं स्फुटीकृतं चित्रमिव । अनेनोपमानेन सातिशयचमत्कारहेतुत्वं वपुषः प्रतिपादितम् । सूर्यांशुभिः सूर्यस्यांशुभिः रश्मिभिः भिन्नं विकासितमरविन्दमिव[2] । अनेन विशिष्टोपयोगयोग्यत्वम् । चकारोऽध्याहार्यः । चतुरश्रशोभं चतुरश्रा समग्रा शोभा यस्य तत् तथा । चतुरश्रशब्दोऽयं निरूढलक्षणया समग्रार्थवाचकः । सम्पूर्णशोभमित्यर्थः । बभूव सञ्जा-

---

१. 'त ए' ख. पाठः. २. 'वाहेन' ख. पाठः. ३. 'व च । अ' घ. पाठः.

तम्। अत्र चतुरश्रशोभत्वम् उपमानद्वयस्योपमेयस्य च साधारणो धर्मः । अत्र तूलिकोन्मीलितत्वसूर्यांशुभिन्नत्वे यौवनविभक्तावयवत्वं च दृष्टान्तालङ्कारवत् परस्परं बिम्बप्रतिबिम्बभावमनुभवन्ति, साधारणधर्मभूतस्य चतुरश्रशोभत्वस्य हेतुभावमप्यनुभवन्ति ॥ ३१ ॥

अभ्युन्नताङ्गुष्ठनखप्रभाभि-
विक्षेपणाद् रागमिवोद्गिरन्तौ ।
आजह्रतुस्तच्चरणौ पृथिव्यां
स्थलारविन्दश्रियमव्यवस्थाम् ॥ ३२ ॥

(प्रकाशिका)

अभ्युन्नतेति ।

"यस्या रक्तनखौ पादावुन्नताग्रौ तलस्पृशौ ।
निगूढगुल्फौ निचितौ सा स्यान्नृपतिसम्मता ॥"

इति सामुद्रिकवचनाद् अभ्युन्नतत्वविशेषणम् । स्त्रीनखानां रक्तत्वमुचितम् । तथा चास्यान्यः प्रयोगः 'अग्रे स्त्रीनखपाटलं कुरवकं श्यामं द्वयोर्भागयोरि'ति । विक्षेपणात् सवेगप्रेरणात्, तज्जनितात् खेदादित्यर्थः । रागं लाक्षाम् । 'रागोऽनुरागे लाक्षायामि'ति यादवः । अव्यवस्थां सञ्चारिणीम् । अतः सविशेषेयं निदर्शना । 'हस्ती हि जङ्गमं दुर्गमि'ति सविशेषरूपकवत् ॥ ३२ ॥

(विवरणम्)

[२] अथ षोडशभिः श्लोकैर्देव्या अवयवान् वर्णयति । तत्रादौ अङ्गुष्ठयोः शोभातिशयं चरणयोः शोभां चाह—

अभ्युन्नतेति । तच्चरणौ स्थलारविन्दश्रियमाजह्रतुः । तच्चरणौ तस्या देव्याश्चरणौ पादारविन्दे स्थलारविन्दश्रियं स्थलारविन्दस्य स्थलपद्मस्य श्रीः शोभा या ताम् आजह्रतुराहृतवन्तौ । तत्र हेतुमुत्प्रेक्षते—पृथिव्यां विक्षेपणा-

१. 'स्तिभिर्जङ्ग' ङ. पाठः. २. 'तस्याः पादौ वर्णयति—अभ्यु' ख. पाठः.

दभ्युन्नताङ्गुष्ठनखप्रभाभी रागमुद्गिरन्ताविवेति । पृथिव्यां भूम्यां विक्षेपणात् पदविन्यासाद्धेतुना । अभ्युन्नताङ्गुष्ठनखप्रभाभिः अभ्युन्नतयोस्तलस्पर्शनसमयेऽधिकमुन्नताग्रयोरिति यावत् । तयोरङ्गुष्ठयोर्यौ नखौ तयोः प्रभाभिः करणभूताभिः रागं लाक्षाम्। 'रागोऽनुरागे लाक्षायाम्' इति यादवः। उद्गिरन्तौ उद्गमन्ताविव । पूर्वसेवितं लाक्षारसं स्वभावारुणैर्नखमयूखैरुद्गमन्ताविवेत्यर्थः[1] । खेदाकुला हि पूर्वसेवितमुद्गमन्तीति भावः । तत्रा(जहार?हरण)हेतुं श्रीविशेषणमाह—अव्यवस्थामिति । सञ्चारिणीमिति यावत् । अनेनारविन्दश्रीविशेषणेन तन्नखश्रीः सर्वदैवेति द्योतितं, न तलस्पर्शनसमय एवेति भावः । अत्र नखमयूखानां रागातिशय उत्प्रेक्षाहेतुः । चरणाग्रस्याभ्युन्नतत्वं रक्तनखत्वं च महाभाग्यद्योतकम् । यथोक्तं सामुद्रिके—

"यस्या रक्तनखौ पादावुन्नताग्रौ तलस्पृशौ ।
निगूढगुल्फौ निचितौ सा स्यान्नृपतिसम्मता ॥"

इति ॥ ३२ ॥

**सा राजहंसैरिव सन्नतांसा[3]**
**गतेषु लीलाञ्चितविक्रमेषु ।**
**व्यनीयत प्रत्युपदेशलुब्धै-**
**रादित्सुभिर्नूपुरशिञ्जितानि ॥ ३३ ॥**

(प्रकाशिका)

**सा राजहंसैरिति।** सन्नतांसेति राजहंससाम्यप्रतिपत्त्यर्थम् । ते हि तथा प्रसिद्धाः प्रयोगेषु, यथा— 'स्मर्तव्याः शिथिलांसहंसरुचयो गोदावरीवीचयः' इति। यथा वा 'बक! यदि तथा वेत्सि किञ्चिच्छ्लथांसस्तूष्णीमेवासितुमपि सखे! त्वं कथं मे न हंस' इति। अञ्चितः पूजितः विक्रमः पद-

---

१. 'र्थः । मृदुतया तलस्पर्शनखे' क. ख. पाठः. २. 'वः । अत्र' ग. घ. पाठः.
३. 'ताङ्गी' मुद्रितकोशपाठः.

विन्यासः। इदं तदीयगतसाम्यसिद्ध्यर्थम्। अत्र देव्या गतेषु विषयभूतेषु राजहंसकर्तृकं विनयनं, तद्धेतुतया प्रत्युपदेशलोभः, तद्धेतुतया नूपुरशिञ्जितादित्सा चोत्प्रेक्ष्यते। तत्र च तद्गमनसंवादिनो देव्यास्तथाविधस्य गमनस्य, तन्नूपुरशिञ्जितसंवादिनस्तद्रुतस्य चोपलम्भो हेतुः। प्रत्युपदेशश्चार्थादादित्सासमानविषयोऽवसेयः ॥ ३३ ॥

(विवरणम्)

अथ चरणगतं सविलासगमनं वर्णयति —

सेति। सा राजहंसैर्व्यनीयतेव। सा पार्वती राजहंसैर्हंसविशेषैः।

"हंसास्तु श्वेतगरुतश्चक्राङ्गा मानसौकसः।

राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः ॥"

इति सिंहः। गतेषु गमनेषु व्यनीयत विनीताभूत्। पार्वती गमनविषये राजहंसैः शिक्षिताभूदिवेत्युत्प्रेक्षा। देव्यास्तादृशगमनशिक्षणे योग्यत्वमाह—सन्नतांसेति। सन्नतौ सम्यङ्नतावंसौ यस्याः सा तथा। 'सन्नतांसाः स्त्रियः पूज्या उन्नतांसास्तु पूरुषाः' इति सामुद्रिकप्रसिद्धिः। अनेन स्वरूपतोऽपि देव्या राजहंससाम्यं प्रतीयते। हंसा हि सन्नतांसतया प्रसिद्धाः 'स्मर्तव्याः शिथिलांसहंसरुचयो गोदावरीवीचयः' इत्यादिषु। ननु हंसविनीतत्वोत्प्रेक्षायां का हेतुरित्यत्र गमनविशेषणमाह—लीलाञ्चितविक्रमेष्विति। लीलया विलासेन अञ्चिताः पूजिताः विक्रमाः पदविन्यासा येषु तेषु। हंसगमनानामपि तथात्वमुत्प्रेक्षाहेतुरिति भावः। किमर्थमेते देवीमशिक्षयन्नित्यत्राह—प्रत्युपदेशलुब्धैरिति। प्रत्युपदेशे लुब्धैः सश्रद्धैः।

"गुरुशुश्रूषया वापि पुष्कलेन धनेन वा।

अथवा विद्यया विद्या तुरीयं नोपपद्यते ॥"

१. 'स्यार्थम्' क. पाठः. २. 'या विद्या पु' क. ख. ग. पाठः.

इति न्यायेन प्रत्युपदेशलोभादिति भावः। ननु किमेतेषामभिलषितमित्यत्राह— नूपुरशिञ्जितान्यादित्सुभिरिति। नूपुरयोः मञ्जीरयोः। 'पादाङ्गदं तुलाकोटिर्मञ्जीरो नूपुरोऽस्त्रियामि'त्यमरः। शिञ्जितानि शब्दान्। 'भूषणानां तु शिञ्जितमि'त्यमरः। अत्र देव्याः सविलासगमने राजहंसकर्तृकं विनयनमुत्प्रेक्ष्यते। विनयने तु प्रत्युपदेशलोभो हेतुत्वेनोत्प्रेक्ष्यते। लोभे तु नूपुरशिञ्जितादित्सेति सर्वोऽप्युत्प्रेक्षित एवायं वाक्यार्थः। देव्यां तद्गमनसंवादिनो गमनस्य, हंसेषु नूपुरशिञ्जितसंवादिनो रुतस्य च दर्शनमुत्प्रेक्षाहेतुः॥ ३३॥

वृत्तानुपूर्वे च न चातिदीर्घे
जंघे शुभे सृष्टवतस्तदीये।
शेषाङ्गनिर्माणविधौ विधातु-
र्लावण्यमुत्पाद्यमिवास यत्नः॥ ३४॥

(प्रकाशिका)

वृत्तेति। वृत्ते अनुपूर्वे अनुगतपूर्वे पूर्वानुरूपे च ये भवतः, ते तथा। शुभे भद्रे, लावण्यमय्याविर्त्यर्थः। शेषाङ्गनिर्माणविधौ 'निमित्तात् कर्मसंयोगे' (वा.२.३.३६) इति सप्तमी, 'चर्मणि द्वीपिनं हन्ती'तिवत्। शेषाङ्गनिर्माणेन हि निमित्तेन लावण्यमुत्पाद्यते। अनादरे सप्तमीति तु न युक्तं, निमित्तस्य रमणीयत्वात्। अत्रासेति प्रयोगं समर्थयितुं वामनसूत्रम् 'आसेत्यसतेः' (५.२.२७)। वृत्तिश्चास्य सूत्रस्य 'लावण्यमुत्पाद्यमिवास यत्न इत्यत्रासेत्यसतेर्धातोः अस गतिदीप्त्यादानेष्विति[1] प्रयोगः, नास्तेः, भूभावविधानाद्' इति। दक्षिणावर्तेन तु धातुप्रदीपकारमतमनुसरता 'लावण्य उत्पाद्य इवास यत्न' इति पाठोऽङ्गीकृतः, गत्यर्थत्वं च। तत्र विसन्धिदोषोऽर्थासङ्गतिश्च, गत्यर्थयोगे कर्मणोऽपेक्षितत्वात्। उत्पत्तुमिति

१. 'ण्य उत्पाद्य इ' मुद्रितकोशपाठः.

[1] 'त्यस्य प्र' इति मुद्रितकाव्यालङ्कारसूत्रपाठः.

पाठेऽप्यन्तर्भावितण्यर्थत्वेन धातोर्दीप्त्यर्थत्वेन च निर्वाहः शक्य इव प्रतिभाति। नातिदीर्घे इति प्रसज्यप्रतिषेधो न युक्तः । तत्र हि क्रियापदसम्बन्धेन नञा भाव्यम् । तदा च विवक्षितार्थवैपरीत्यं स्यात् । पर्युदासेन तु भाव्यम् । यतस्तत्र प्रतिषेधवाचिनः समासे गुणीभावात् क्रियाया न निषेधः । इत्थञ्च प्रसज्यप्रतिषेधपर्युदासयोर्नैकविषयत्वम् । तयोश्च लक्षणं कृतं भर्तृहरिणा—

"प्रधानत्वं विधेर्यत्र प्रतिषेधेऽप्रधानता ।
पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् ॥
अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता ।
प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ् ॥"

इति ॥ ३४ ॥

(विवरणम्)

जङ्घाद्वयं वर्णयति—

वृत्तेति । तदीये शुभे जङ्घे सृष्टवतः विधातुः शेषाङ्गनिर्माणविधौ लावण्यमुत्पत्तुं यत्न आस इव । तदीये तत्सम्बन्धिन्यौ शुभे भद्रे लावण्यमय्यावित्यर्थः । जङ्घे जङ्घाद्वयं सृष्टवतो निर्मितवतो विधातुर्ब्रह्मणः शेषाङ्गनिर्माणविधौ शेषाणामवशिष्टानामङ्गानामवयवानां निर्माण एव विधौ विधाने। 'विधिर्विधाने दैवेऽपी'त्यमरः। 'निमित्तात् कर्मसंयोगे'(वा० २. ३. ३६)इति सप्तमी। चर्मणि द्वीपिनं हन्तीतिवत् । शेषाङ्गनिर्माणमेव लावण्योत्पादने निमित्तम् । अर्थात् तस्या इति लभ्यते। लावण्यं सौन्दर्यम् उत्पत्तुमुत्पादयितुम् । अन्तर्भूतण्यर्थोऽयं प्रयोगः। यत्नः प्रयासः आस बभूवेव । नायमस्तिधातोरुत्पन्नः शब्दः, तस्य 'अस्तेर्भूः' (२. ४. ५२) इति भूभावविधानात् । 'अस गतिदीप्त्यादाने-

---

१. 'यास' क. ग. पाठः.

ष्वि'ति धातोर्लिटि दीप्त्यर्थोऽयं शब्दः । दिदीपे यत्नोऽतीव बभूवेत्यर्थः । तथाच वामनसूत्रम् 'आसेत्यसतेः' (५. २. २७) इति । तदीयाङ्गनिर्माणार्थं सम्पादितेषु लावण्यद्रव्येषु सर्वेष्वपि जङ्घाद्वयनिर्माणकर्मण्येवोपक्षीणेषु पुनर्महता प्रयासेन लावण्यपुञ्जं सम्पाद्य तदनुरूपमवयवान्तरं निर्मितवानिव विधातेत्युत्प्रेक्ष्यते । जङ्घाद्वये लावण्यातिशयदर्शनमुत्प्रेक्षाहेतुः । लावण्यातिशयमेव विशेषणद्वयेनाह — वृत्तानुपूर्वे चेत्यादिना । अत्रातिदीर्घे न भवत इति नञः क्रियासम्बन्धानुपपत्तेर्न प्रसज्यप्रतिषेधः । किन्तु पर्युदास एव । प्रसज्यप्रतिषेधपर्युदासयोर्विशेषे भर्तृहरिः —

"प्रधानत्वं विधेर्यत्र प्रतिषेधेऽप्रधानता ।
प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ् ॥"

इति,

"अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता ।
पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् ॥"

इति च । तदेवमन्वयः—वृत्तानुपूर्वे चातिदीर्घे न चेति । वृत्ते चानुपूर्वे चेति वृत्तानुपूर्वे । वृत्ते वर्तुले अनुगतपूर्वे पूर्वानुरूपे पूर्ववर्णितचरणद्वयानुगुणे चेत्यर्थः । अतिदीर्घे अत्यन्तं दीर्घे च न, नाप्यतिह्रस्वे चेति भावः । 'अतिदीर्घा भृशं ह्रस्वा', 'दीर्घजङ्घा प्रपद्यायुर्दीर्घकालं सुखं त्यजेत्', ह्रस्वजङ्घां स्त्रियं त्यजेद्' इत्यादिसामुद्रिकोक्तस्त्रीदोपनिषेधपरमिदं विशेषणम् ॥ ३४ ॥

**नागेन्द्रहस्तास्त्वचि कर्कशत्वा-**
**देकान्तशैत्यात् कदलीविशेषाः ।**
**लब्ध्वापि लोके परिणाहि रूपं**
**जातास्तदूर्वोरुपमानबाह्याः ॥ ३५ ॥**

(प्रकाशिका)

**नागेन्द्रहस्ता इति ।** त्वचिकर्कशत्वादिति 'अमूर्धमस्तकात् स्वा-

---

१. 'स्त्री' घ, पाठः

ञाद्—' (६.३.१२) इत्यलुक् । एकान्तं नियतम् । अनेन घर्मकाल एव तदूर्वोः शीतलत्वमिति ध्वन्यते । कदलीविशेषा विशिष्टकदल्यः । यथा पुरुषविशेष ईश्वर इति । लोके लोकदृष्टौ । यथा लोकवृत्तं लोक इति । उपमानमुपमितिः, तत्र बाह्या अनुपयोगिनः, अर्थादुपमानत्वेन । लोक उपमानबाह्या जाता इत्यन्वयः । नागमात्रहस्तस्य कदलीमात्रस्य च नैतदूरुतुल्य[1]परिणाहि[2]रूपत्वमपीतीन्द्रविशेषशब्दौ प्रयुक्तौ । व्यतिरेकश्चात्रालङ्कारः । तस्य चाङ्गं विरोधः । तथाहि—प्रसिद्धः साधारणधर्म उपमानत्वं प्रयोजयति । एवं स्थिते परिणाहिरूपत्वलक्षणसाधारणधर्मे सत्युपमानत्वाभावो विरुद्धः । विरोधे सत्यपि स्वधर्मनिकर्षहेतोः कर्कशत्वशी[3]तलत्वलक्षणधर्मद्वयस्य प्राबल्यात् तत्कार्यभूतस्योपमेयाधिक्यस्य लब्धप्रतिष्ठत्वम् । आधिक्यमेवं चास्मन्मते व्यतिरेकः । नं चात्र सन्नप्यसत्कल्पो विरोधः पुष्णाति । यथा बाध्यत्वेन निबद्धो रसोऽङ्गिनं रसम् । ननु तदूर्वोरिति विधेयाविमर्शदुष्टं, वर्णनीयतया तदर्थस्य प्राधान्यात्, समासे च तस्य गुणीभावात् । न । ऊर्वोरेव वर्णनीयत्वेन संरम्भविषयत्वात् । न च तत्सम्बन्धनिबन्धन ऊर्वोरतिशयो विवक्षितः । यथा रामस्य बाहुरसीत्यादौ बाहोर्निर्देयत्वम् । किन्तु सम्बन्धमात्रम् । तस्मान्न विधेयत्वम् । तदुक्तं—

"सम्बन्धमात्रमर्थानां समासो ह्यवबोधयेत् ।
नोत्कर्षमपकर्षं वा वाक्यात् तूभयमप्यदः ॥"

इति ॥ ३५ ॥

(विवरणम्)

करुद्वयं वर्णयति—

नागेन्द्रेति । नागेन्द्रहस्ताः त्वचिकर्कशत्वात् कदलीविशेषा एकान्तशै-

---

१. 'ल्यं' ख. पाठः  २. 'हित्व' ख. पाठः.  ३. 'तत्व' ख. पाठः.  ४. 'वास्म' क. पाठः.

त्वात् परिणाहि रूपं लब्ध्वापि लोके तदूर्वोरुपमानबाह्या जाताः। नागेन्द्रहस्ताः नागेन्द्राणामैरावतादीनां हस्ताः शुण्डाः, न तु सामान्यगजहस्ताः, तेषां परिणाहेनापि सादृश्याभावात्। त्वचिकर्कशत्वाद् 'अमूर्धमस्तकात् स्वाङ्गाद् कामे' (६. ३. १२) इत्यलुक्। त्वग्गतात् कार्कश्यादित्यर्थः। कदलीविशेषाः विशिष्टाः कदल्यः, न तु सामान्यकदल्यः। नन्दनोद्यानादिप्ररूढाः कनककदलीकाण्डा इति भावः। यथोक्तं सौन्दर्यलहर्यां 'करीन्द्राणां शुण्डाः कनककदलीकाण्डपटलीमुभाभ्यामूरुभ्यामुभयमपि निर्जित्य भवती' इति। एकान्तशैत्याद् एकान्तेन नियमेन यत् शैत्यं शीतत्वं तस्माद्धेतोः। घर्मकाल एव तदूर्वोः शीतलत्वादिति भावः। यथोक्तं 'शीतकाले भवत्युष्णमुष्णकाले च शीतलम्। सुन्दरीणां कुचद्वन्द्वमूरुद्वन्द्वं च' इति। परिणाहि परिणाहो विशालतास्यास्तीति परिणाहि। 'परिणाहो विशालता' इत्यमरः। रूपं स्वरूपं लब्ध्वापि सम्प्राप्यापि लोके लोकदृष्टावित्यर्थः। लोकवृत्तं लोक इतिवत्। तदूर्वोः तस्याः पार्वत्याः ऊर्वोः ऊरुप्रदेशयोः उपमानबाह्याः उपमानं उपमितिः। भावे ल्युट्। तत्र बाह्या अनुपयोगिनो जाताः। करीन्द्रशुण्डादीनां विशालस्वरूपसाधारणधर्मलाभे सत्यपि स्वरूपणावस्थायां कर्कशत्वैकान्तशैत्याभ्यामपकर्षः, उपमेयस्य तु तदभावादुत्कर्ष इत्युपमानादुपमेयस्योत्कर्षप्रतिपादनाद् व्यतिरेकोऽलङ्कारः। 'उपमानाद् यदन्यस्य व्यतिरेकः स एव स' इति। परिणाहि रूपं लब्ध्वाप्युपमानबाह्या जाता इति प्रतीयमानो विरोधस्तु व्यतिरेकस्याङ्गम्॥ ३५॥

> एतावता नन्वनुमेयशोभं[3]
> काञ्चीगुणस्थानमनिन्दितायाः।
> आरोपितं यद् गिरिशेन पश्चा-
> दनन्यनारीकमनीयमङ्कम्॥ ३६॥

---

१. 'श्यां चाह' क. ग. पाठः 'का' क. ख. ग. पाठः. ३. 'मि' इति मुद्रितकोशपाठः.

(प्रकाशिका)

एतावतेति । एतच्छब्देन यच्छब्दं परामृश्योत्तरवाक्यार्थः प्रत्य-वमृश्यते । प्रत्ययेन तु वाक्यबलात् परिमितपरिमाणवाचिनानुमितेः सौकर्यगुणो दर्शितः । ननुरवधारणे । तेन शोभावगमे वर्णनानपेक्षो-च्यते । अनिन्दितायाः अनवद्यायाः, सर्वाङ्गशोभिन्या इत्यर्थः । ततश्च नितम्बशोभायाः सातिशयत्वमनुमीयते, न शोभामात्रमित्यवसेयम् । आरोपितं न त्वारूढम् । गिरिशेन, न तु गिरिशस्य । वर्ण्यमानावस्था-पेक्षया पश्चाच्छब्दः । अनन्यनारीकमनीयम्, अत्यन्तदुरवापत्वात् । तथा-विधपरमेश्वराङ्कारोपणेनैव नितम्बस्य सर्वातिशायिशोभत्वमनुमेयं, न त्वितरावयववद् वर्णनापेक्षीत्यर्थः । नन्वनेकस्यैकत्र विकल्पेन प्राप्तौ नियमः । ततश्चानेकसाधारणेन विषयेण भवितव्यम् । तदत्र लिङ्गवर्ण-नयोः साधारणं मेयत्वमेवोपादेयं, न तद्विशेषोऽनुमेयत्वं, तस्यासा-धारणत्वात् । सत्यम् । किन्तु मेयत्वमेवात्र विवक्षितम् । न चात्र सा-मान्यपरिवृत्तिर्दोषः, यतोऽनेनानुमितेरर्थाव्यभिचारित्वाद् वर्णनात उत्क-र्षो द्योत्यते । तस्मादत्र दोषस्यापि गुणत्वम् ॥ ३६ ॥

(विवरणम्)

नितम्बप्रदेशं वर्णयति—

एतावतेति । अनिन्दितायाः काञ्चीगुणस्थानमेतावता ननु अनुमेयशो-भम् । अनिन्दितायाः निन्दितं दोषस्तद्रहितायाः, अनवद्याया इत्यर्थः । सर्वा-वयवसुन्दर्या इति यावत् । तेन च नितम्बशोभाया निरतिशयत्वमेवात्रानुमेयं, न शोभामात्रमिति व्यज्यते । काञ्चीगुणस्य रशनादाम्नः स्थानं, नितम्ब-प्रदेश इत्यर्थः । एतावता एतावन्मात्रेण । अत्र एतच्छब्देन उत्तरवा-क्यार्थः परामृश्यते । परिमितपरिमाणवाचिना वतुप्रत्ययेन पुनरनुमितेः सौकर्यं दर्शितम् । ननुशब्दोऽवधारणे । एतावन्मात्रेणैवेत्यर्थः । अनुमेया

---

१. 'क्षः प्र' ख. ग. पाठः.

अनुमातुं शक्या शोभा यस्य तत् तथा । भगवत्या नितम्बशोभा वक्ष्यमाण-प्रकारेणैव सुखानुमेयेति किं तद्वर्णनयेति भावः । तमेव प्रकारमाह—पश्चाद् गिरिशेनाङ्कमारोपितं यदिति । अत्र वर्ण्यमानावस्थापेक्षया पश्चाच्छब्दः । गिरिशेन न तु गिरिशस्य । अङ्कमुत्सङ्गमारोपितं, न त्वारूढम् । जगदीश्वरेण स्वयमेव रागातिशयादारोपितं, न तु देव्या गिरिशस्याङ्क-मारूढमिति भावः । यद् यस्मात् तस्माद्धेतोरनुमेयशोभमिति पूर्वेणा-न्वयः । गिरिशाङ्कस्य विशेषणमाह—अनन्यनारीकमनीयमिति । अन्याभि-र्नारीभिः कामयितुं शक्यं न भवतीति तथा । न ह्यत्यन्तदुरवापेऽर्थे कामः सम्भवतीति भावः । नन्वत्रावगम्यशोभमित्येव वक्तव्यम् । अत्र हि वर्णन-यावगम्यत्वं प्रतिषिध्यते, न लिङ्गान्तरेणावगम्यत्वम् । यदि लिङ्गान्तरं प्रतिषिध्य गिरिशाङ्कारोपणरूपं लिङ्गं विधीयते, तर्ह्यनेनैवानुमेयशोभमिति शक्यं वक्तुं, (न) वर्णनप्रतिषेधपरत्वे । मैवम् । अवगम्यत्वमात्रस्यैवात्रापि विवक्षितत्वात् । न चैवं सति सामान्यवाचिनावगम्यशब्देनैव वक्तव्यमिति वाच्यम् । अनुमितेरर्थाव्यभिचारित्वं, वर्णनायास्तु न तथेति विशेषप्रतिपाद-नपरत्वादनुमेयशब्दप्रयोगस्य । तस्मात् सामान्यपरिवर्तो नात्र दोषाय, अपितु गुणायैव ॥३६॥

> तस्याः प्रविष्टा नतनाभिरन्ध्रं
> रराज तन्वी नवरोमराजिः ।
> नीवीमतिक्रम्य सितेतरस्य
> तन्मेखलामध्यमणेरिवार्चिः ॥ ३७ ॥

(प्रकाशिका)

तस्या इति । नतनाभिरन्ध्रं प्रविष्टेति रोमावल्यास्तदवधिकप्रसरत्व-वचनेन नवत्वं, तेन च नवयौवनस्यावस्थाविशेषः प्रकाश्यते । सम्भाव-नाभागेऽपि नतनाभिरन्ध्रं प्रविष्टेत्यनुषञ्जनीयम् । अन्यथा अतिक्रमस्य

पौर्वकाल्यं किमपेक्षं स्यात् । तन्वीति प्रशस्तलक्षणार्थम् । नीवी वस्त्रग्रथनम् । 'स्त्रीकटीवस्त्रबन्धे स्यान्नीविः' इत्यादि केशवः । तदतिक्रमणमर्चिषोऽसम्भवदुत्प्रेक्षाङ्गम् ॥ ३७ ॥

(विवरणम्)

रोमराजिं वर्णयति —

तस्या इति । तस्या नतनाभिरन्ध्रं प्रविष्टा नवरोमराजिः रराज । तस्याः पार्वत्या नतनाभिरन्ध्रं नतं गम्भीरं नाभिरन्ध्रं नाभिप्रदेशं प्रविष्टा प्राप्ता सती । तदानीमेव नाभिरन्ध्रं प्रसृतेत्यर्थः । अत एव यौवनारम्भसम्पादिता रोमराजिः रोमावलिः रराज शुशुभे । अत्र नतनाभिरन्ध्रमित्यनेन नाभिवर्णनमपि कृतम् । रोमराज्या मनोहारित्वमाह—तन्वीति । तन्वी कृशा । एतदपि प्रशस्तनारीलक्षणम् । रोमराजिमुत्प्रेक्षते — सितेतरस्य तन्मेखलामध्यमणेरर्चिर्नीवीमतिक्रम्य नतनाभिरन्ध्रं प्रविष्टेवेति । सितेतरस्य कृष्णस्य तन्मेखलामध्यमणेः तस्याः पार्वत्या मेखला रशना तस्या मध्ये यो मणिः रत्नम् । 'रत्नं मणिर्द्वयोरि'त्यमरः । तस्यार्चिस्तेजो नीवीं वस्त्रबन्धम् । 'स्त्रीकटीवस्त्रबन्धेऽपि' इत्यमरः । तामतिक्रम्य नतनाभिरन्ध्रं प्रविष्टेव । मेखलामध्यवर्तिनो नायकमणेरर्चिरेव नीवीमतिक्रम्य नतनाभिरन्ध्रं प्रविष्टेवेत्यर्थः । वर्णसाम्यादिकमुत्प्रेक्षाहेतुः । नेयमुपमा, अर्चिषो नीव्यतिक्रमासम्भवात् ॥ ३७ ॥

मध्येन सा वेदिविलग्नमध्या<br>
वलित्रयं चारु बभार बाला ।<br>
आरोहणार्थं नवयौवनस्य[1]<br>
कामेन सोपानमिव प्रयुक्तम् ॥ ३८ ॥

---

१. 'नवयौवनेन कामस्य' इति मुद्रितपुस्तकपाठः ।

(प्रकाशिका)

मध्येनेति। वेद्या विलग्नं मध्यमिव मध्यं यस्या इति विगृह्णानो दक्षिणावर्तः 'सप्तम्युपमाने'त्यादिना समासममंस्त। वयं तु वेदिरिव विलग्नमध्येति विगृह्य 'उपमानानि—' (२. १. ५५) इति समासं मन्यामहे विलगति ह्रसतीति विलग्नं कृशमित्यर्थः। ननु 'अवलग्नं विलग्नं च मध्यो मध्यम इत्यपी'ति हलायुधवचनाद् वेदिविलग्नं वेदिमध्यमिव मध्यं यस्या इति विग्रहः किं नाश्रितः। तदाश्रयणे वेदिविलग्नेति वेदिमध्येति वा रूपं स्यात्। उत्तरपदलोपात्। अत्राकारसाम्याद् वलित्रये विशिष्टसोपानोत्प्रेक्षायां कामेनेति कर्तृविशेषवाचिना शब्दोपात्तस्य चारुत्वस्य लोकोत्तरता ध्वन्यते। सोपानौचित्याद् आरोहणस्य प्रयोजनत्वेन कल्पनम्। नवयौवनस्येति तत्कर्तृविशेषवाचिना प्रागेव तदागमनप्रतीक्षता कामस्य ध्वन्यते। दक्षिणावर्तस्तु— कालेनेति पठित्वा यौवनोत्पादकालेनेति व्याचष्ट। तत्र कर्तृविशेषस्यानुपयोगः। कर्तृमात्रस्यान्यथापि सिद्धिः॥ ३८॥

(विवरणम्)

वलित्रयं वर्णयति—

मध्येनेति। सा बाला मध्येन वलित्रयं बभार। सा पार्वती। बालेत्यनेन वलित्रयाभिव्यक्तेः कालप्राप्तिर्ध्वन्यते। मध्येनावलग्नेन। 'अवलग्नं विलग्नं च मध्यं मध्यम इत्यपि' इति हलायुधः। वलित्रयं वलीनां त्रयं, त्रिवलीमित्यर्थः। बभार धृतवती। वलित्रयमुत्प्रेक्षते— नवयौवनस्यारोहणार्थं कामेन प्रयुक्तं सोपानमिवेति। नवयौवनस्य नवस्याभिनवस्य यौवनस्य। अत एवारोहणे सोपानापेक्षा। आरोहणार्थं स्तनवदनादिप्रदेश-

१. 'नवस्वा' ख. ग. घ. पाठः.

प्राप्त्यर्थमित्यर्थः। अत्र तादृशवलित्रयरूपसोपाननिर्माणकर्म तच्छिल्पिनं कल्पयति—कामेनेति। न ह्यन्येन निर्मिते तादृशं चारुत्वं सम्भवतीति भावः। प्रयुक्तं निर्मितं सोपानमिव। अत्र मदनस्य सोपानकर्तृत्वोत्प्रेक्षया तस्य प्रागेवागत्य यौवनागमप्रतीक्षणं ध्वन्यते। तेन च देव्याश्चारुत्वातिशयः। अवलग्नं वर्णयति—वेदिविलग्नमध्येति। वेदिरिव विलग्नमध्या। 'उपमानानि सामान्यवचनैः' (२. १. ५५) इति समासः। वेदिर्यज्ञशालायां द्व्यङ्गुलनिखातो भूभागः। विलगति ह्रसतीति विलग्नं, कृशमित्यर्थः। वेदिरिव[1] कृशमध्येत्यर्थः। वेद्याः कृशमध्यत्वं प्रसिद्धम्। वलित्रयस्य सोपानपरम्परावत् क्रमेणावस्थानं तदुत्प्रेक्षाया हेतुः। अत एव चारु सुन्दरम् ॥ ३८ ॥

> अन्योन्यमुत्पीडयदुत्पलाक्ष्याः
> स्तनद्वयं पाण्डु तथा प्रवृद्धम्।
> मध्ये यथा श्याममुखस्य तस्य
> मृणालसूत्रान्तरमप्यलभ्यम् ॥ ३९ ॥

(प्रकाशिका)

अन्योन्यमिति। उत्पीडयदुत्थाय पीडयत्। पाण्डुत्वं श्याममुखत्वं च यौवनप्रौढिकृतम्। मृणालसूत्रस्यान्तरमवकाशः। अलभ्यं परीक्षकलोकेनेति शेषः। 'मृणालसूत्रेण पदं न लब्धमि'ति केचित् पठन्ति। तदानीमर्थः सुगमः। किन्त्वपेरपेक्षितत्वान्न्यूनपदत्वम्। ननु उत्पीडनकर्तृभूतस्तनसमुदायरूपैकार्थवाचिस्तनद्वयशब्दसमभिव्याहारेणा-न्योन्यशब्दः[2] कथं प्रयुज्यते, तस्यानेकविषयकर्मव्यतीहारवाचित्वात्। नैवम्। स हि न कर्मव्यतीहारवाची। किन्तु कर्मव्यतीहारविषयभूत-

१. 'वेद्याः' ख. पाठः. २. 'न्योन्यमि' ङ. पाठः.

समकक्ष्यानेकपदार्थ[1]समुदायवाची । तस्मात् कर्तृद्वयवाचिना स्तनद्वयश-ब्देन कर्मद्वयवाचिनोऽन्योन्यशब्दस्य समभिव्याहारो घटत एव ॥ ३९ ॥

( विवरणम् )

स्तनद्वयं वर्णयति—

अन्योन्यमिति । उत्पलाक्ष्याः स्तनद्वयं तथा प्रवृद्धम् । उत्पलाक्ष्याः उत्पले कुवलये इवाक्षिणी यस्यास्तस्याः । स्तनद्वयं[2] स्तनयोः कुचयोर्द्वयं द्वन्द्वम् । तथा वक्ष्यमाणप्रकारेण प्रवृद्धं प्रकर्षेण वृद्धं परिपुष्टमासीत् । तमेव प्रकारमाह—यथा श्यामुखस्य तस्य मध्ये मृणालसूत्रान्तरमपि अलभ्यमिति । यथा यादृशेन वर्धनेन श्याममुखस्य श्यामं मुखं यस्य तस्य । श्याममुखत्वं यौवनकृतम्[3] । तस्य स्तनद्वयस्य मध्ये अन्तराले । मृणालसूत्रान्तरं मृणालस्य सूत्रं मृणालसूत्रं, तस्यान्तरमवकाशः । किं पुनरन्यसूत्राणामन्तरमित्यपिशब्दार्थः । अलभ्यं लब्धुमशक्यम् । कियदन्तरमनयोरित्यवगन्तुं परीक्षाप्रसङ्गे तन्मध्यं नीयमानस्य बिसतन्तोरन्तरमपि यथा परीक्षकजनेन न लभ्यं, तथा प्रवृद्धमासीदित्यर्थः । 'मृणालसूत्रान्तरमप्यलब्धमि'ति पाठे कर्मणि निष्ठा । 'मृणालसूत्रेण पदं न लब्धमि'ति पाठस्तु सुगमार्थोऽप्यपिशब्दाभावेन न्यूनपदत्वदोषादुपेक्षणीयः । उक्तार्थसमर्थकं विशेषणमाह — अन्योन्यमुत्पीडयदिति । अन्योन्यं परस्परम् । उत्पीडयदुत्थाय पीडयत् । अत एव चारु सुन्दरम् । पाण्ड्विति पाठे पाण्डुत्वमपि यौवनकृतम् ॥ ३९ ॥

शिरीषमालाधिकसौकुमार्यौ
बाहू तदीयाविति मे प्रतर्कः[4] ।
पराजितेनापि कृतौ हरस्य
यौ कण्ठपाशौ मकरध्वजेन ॥ ४० ॥

---

१. 'र्थेवा' ङ. पाठः. २. 'कुचद्व' ख. पाठः. ३. 'तम् । स्त' ख. पाठः. ४. 'पुष्पाधि' मुद्रितपुस्तकपाठः. ५. 'वि' मुद्रितपुस्तकपाठः.

(प्रकाशिका)

**शिरीषेति । प्रतर्क ऊहः । विजितविश्वो मकरध्वजो दर्पाद् देवमासादयन् पराजितो विफलीभूतसुकुमारतरपूर्वोपकरणजातः सन्याभ्यामुपकरणभावमुपयद्भ्यां पशुमिव रज्ज्वा कण्ठे गृहीत्वा तमेव देवं यदात्मविधेयं चकार, तदनयोर्बाह्वोः सौकुमार्यं शिरीषादिना नोपमातुं शक्यमिति भावः ॥ ४० ॥**

( विवरणम् )

बाहुद्वयं वर्णयति—

शिरीषेति । तदीयौ बाहू शिरीषमालाधिकसौकुमार्यौ इति मे प्रतर्कः । तदीयौ तत्सम्बन्धिनौ बाहू भुजौ । शिरीषपुष्पैः कृता माला शिरीषमाला, तदपेक्षयाप्यधिकं सौकुमार्यं सुकुमारत्वं ययोस्तौ । इति उक्तप्रकारेण । प्रतर्क ऊहः । पार्वतीभुजयोः सुकुमारत्वं शिरीषमालाया अप्यधिकतरमिति वयं मन्यामह इत्यर्थः । कथमेवं प्रतर्क इत्यत्राह—यौ पराजितेनापि मकरध्वजेन हरस्य कण्ठपाशौ कृताविति । यौ बाहू पराजितेन पराजयं प्राप्तेन, विफलीभूतसुकुमारतरपूर्वोपकरणेनापीत्यर्थः । मकरो मत्स्यविशेषो ध्वजो यस्य तेन कामदेवेन । हरस्य परमेश्वरस्य कण्ठे पाशौ कण्ठपाशौ, स्ववशीकृत्य स्वेच्छया तत इतः कर्षणार्थं कण्ठे निक्षिप्तौ पाशावित्यर्थः । कृतौ विहितौ । यो मकरध्वजः पूर्वं दर्पाद् देवमासाद्य विफलीभूतसुकुमारतरपूर्वोपकरणो जातः, स एव याभ्यां पशुमिव रज्ज्वा कण्ठे निबध्यात्मविधेयं चकार, तयोः[3] सौकुमार्यं कथं शिरीषकुसुमादिभिरुपमातुं शक्यमिति भावः । अत्र व्यतिरेकोऽलङ्कारः ॥ ४० ॥

**कण्ठस्य तस्यास्तनुबन्धुरस्य**
**मुक्ताकलापस्य च निस्तलस्य ।**

---

१. 'कृ' घ. पाठः. २. 'कृ' ख. पाठः. ३. 'काल' क. ख. ग. पाठः.
४. 'स्याः स्तनब' मुद्रितपुस्तकपाठः.

अन्योन्यशोभाजननाद् बभूव
साधारणो भूषणभूष्यभावः ॥ ४१ ॥

(प्रकाशिका)

कण्ठस्येति । 'बन्धुरं तून्नतानतमि'ति, 'कलापो भूषणे' इति, वर्तुलं निस्तलं वृत्तमि'ति च सिंहः । अत्र विशेषणयोः शोभाजननं प्रति हेतुत्वम् । तत्रापि यथा निस्तलत्वं शोभाजनने हेतुः, तथा तनुबन्धुरत्वमित्युपमानोपमेयभावोऽपि द्रष्टव्यः । अन्योन्यस्मिन् शोभाप्रादुर्भावात् । अन्योन्येन शोभाजननादिति तु पक्षे भूषणभाव एव साधारणो न भूष्यभाव इति दक्षिणावर्तः । तदयुक्तम् । तथाहि—न तावदयमन्योन्यशब्द उभयपर्यायः । स हि कर्मव्यतीहारविषयवाची । तद्योगे च शोभोत्पत्तेरनपेक्षितहेतुत्वं कथं घटते । अन्योन्येनेति विग्रहे भूष्यभावोऽप्यर्थसिद्धः, भूषणभावस्तु शाब्द इत्येतावान् विशेषः । नन्वेवं भूषणभूष्यभावाविति वक्तव्यम् । एकवचनान्तनिर्देशे तु सम्बन्धस्य वाच्यत्वात् तस्य च द्विष्ठत्वात् साधारणत्वं न हेत्वपेक्षं न चातिशयप्रयोजकम् । उच्यते । भूषणभूष्ययोर्भाव इति विग्रहे भावशब्दो यद्यपि सामान्यवाची यथा स्त्रीणां चक्षुषा कुवलयितानि वातायनानीत्यत्र चक्षुश्शब्दः, तथापि तस्य व्यक्तिपर्यवसायित्वात् कण्ठमुक्ताकलापविषये व्यक्तिधर्मोऽसाधारणत्वमेवोपपन्नः । तत्र चक्षुश्शब्दस्य व्यक्तिपर्यवसायित्वादनेकवातायनकुवलयनम् । अनुगतरूपाभिधाने हि तस्य सम्बन्धवाचकत्वं मन्तव्यम् ॥४१॥

(विवरणम्)

कण्ठं वर्णयति—

कण्ठस्येति । तस्याः कण्ठस्य मुक्ताकलापस्य च अन्योन्यशोभाजननाद्

भूषणभूष्यभावः साधारणो बभूव । तस्याः पार्वत्याः कण्ठस्य गलस्य मुक्ताभिः मौक्तिकैः कृतः कलापो मुक्ताकलापः । कलापो भूषणम् । 'कलापो भूषणे बर्हे तूणीरे संहतावपी' त्यमरः । अन्योन्येन हेतुना शोभाजननात् शोभाया जननात् प्रादुर्भावात् । 'जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भव' इत्यमरः । यद्यप्यन्योन्येन शोभाजननादिति विग्रहे शोभाजनने हेतुभूतयोः कण्ठमुक्ताकलापयोर्भूषणभाव एव कण्ठोक्तः, न भूष्यभावः, तथापि भूष्यमाणयोः कण्ठमुक्ताकलापयोर्भूष्यभावोऽप्यर्थादायातीति न काचिदनुपपत्तिः । भूषणभूष्ययोर्भावो भूषणभूष्यभावः । द्वन्द्वात् परः श्रूयमाणो भावशब्दः प्रत्येकमभिसम्बध्यते । भूषणभावो भूष्यभावश्चेत्यर्थः । नन्वत्र भूषणभूष्यभावाविति वक्तव्यम् । एकवचनान्तनिर्देशे तु सम्बन्धस्य वाच्यत्वात् तस्य च 'सम्बन्धो हि सम्बन्धिभ्यां भिन्नस्तावाश्रितश्चैकश्च' इति न्यायेन स्वभावादेवोभयाश्रितत्वनियमादन्योन्यशोभाजननादिति हेतुर्निष्प्रयोजनः स्यात् । कण्ठमुक्ताकलापयोर्भूषणभूष्यभावरूपः सम्बन्धः साधारणोऽभूदित्युक्तेनापि न कश्चिदतिशयः प्रतिपादितो भवति । मैवम् । सामान्यवाचिनोऽप्यस्य भावशब्दस्य व्यक्तिद्वयपर्यवसायित्वात् । यथा स्त्रीणां चक्षुषा कुवलयितानि वातायनानीत्यत्र सामान्यवाचिनोऽपि चक्षुश्शब्दस्य सर्ववातायनगतचक्षुर्विशेषपर्यवसायित्वं, तथात्रापीति । कण्ठेन मुक्ताकलापस्य शोभाजनने हेतुमाह—तनुबन्धुरस्येति । तनुश्चासौ बन्धुरश्चेति तनुबन्धुरः । तनोः कृशस्य, नात्यन्तपीवरस्येत्यर्थः, अत एव बन्धुरस्य सुन्दरस्य । 'बन्धुरौ नम्रसुन्दरौ' इति वैजयन्ती । मुक्ताकलापेन कण्ठशोभाजनने हेतुमाह—निस्तलस्येति । निस्तलस्य वर्तुलस्य । 'निस्तलं वर्तुलं वृत्तम्' इति सिंहः । एते विशेषणे च परस्परमुपमानोपमेयभावमप्यनुभवतः । यथा निस्तलत्वं शोभाजनने हेतुस्तथा तनुबन्धुरत्वमपीति । अत्रान्योन्यमलङ्कारः । 'परस्परंक्रियाजननेऽन्योन्यम्' इति ॥ ४१ ॥

---

१. 'भिः कृ' ख. पाठः. २. 'ष्ययोः' ख. पाठः. ३. 'पशो' घ. पाठः. ४. 'रं क्रि' घ. पाठः.

चन्द्रं गता पद्मगुणान् न भुङ्क्ते
पद्माश्रिता चान्द्रमसीमभिख्याम् ।
उमामुखं तु प्रतिपद्य लोला
द्विसंश्रयां प्रीतिमवाप लक्ष्मीः ॥ ४२ ॥

(प्रकाशिका)

चन्द्रमिति । भुङ्क्ते अनुभवति । 'भुजोऽनवने' (१. ३. ६६) इत्यात्मनेपदम् । अभिख्यां शोभाम् । रात्रिसङ्कोचादिवानुदयलक्षणेन प्रसिद्धेन हेतुद्वयेन पद्मचन्द्रगुणान् पर्यायेणानुभवन्ती तत एव च तत्र तत्र भ्रमन्ती लक्ष्मीस्तदुभयगुणविशिष्टं देव्या वदनकमलं दैवादासाद्य तदुभयानुभवजन्यां प्रीतिं प्रापेत्यर्थः ॥ ४२ ॥

( विवरणम् )

वदनं वर्णयति—

चन्द्रमिति । लक्ष्मीश्चन्द्रं गता पद्मगुणान् न भुङ्क्ते । लक्ष्मीः श्रीः चन्द्रं पूर्णचन्द्रं गता प्राप्ता सती । पद्मगुणान् पद्मे पङ्कजे ये गुणा दिवारमणीयत्वसौरभ्यादयः, तान् । न भुङ्क्ते नानुभवति । 'भुजोऽनवने' (१. ३. ६६) इत्यात्मनेपदम् । तर्हि पद्माश्रितैवास्त्वित्यत्राह–पद्माश्रिता चान्द्रमसीमभिख्यामिति । पद्मं पङ्कजमाश्रिता प्राप्ता सती । चान्द्रमसीं चन्द्रमःसम्बन्धिनीमभिख्यां कान्तिम् । 'अभिख्या कान्तिर्द्युतिश्छविः' इत्यमरः । अत्र चकारोऽर्थाद् द्रष्टव्यः । न भुङ्क्त इति अत्राप्यनुषञ्जनीयम् । लक्ष्मीः पद्माश्रिता सती रजनीरमणीयत्वादिकान् गुणांश्च नानुभवतीत्यर्थः । इत्थं रात्रौ चन्द्रम् अहनि पद्मं च पुनः पुनराश्रित्य भ्रमन्त्या लक्ष्म्या देवीजनानान्तरं दैववशात् कोऽप्यानन्दः सञ्जात इत्याह—उमामुखं प्रतिपद्य तु द्विसंश्रयां प्रीतिमवापेति । उमामुखम् उमायाः पार्वत्या मुखम् । प्रतिपद्य प्राप्य । तुशब्दः पूर्वस्माद्

विशेषमाह । 'तु स्याद् भेदेऽवधारणे' इत्यमरः । द्विसंश्रयां द्वौ पद्मचन्द्रौ संश्रय आश्रयो यस्यास्तादृशीं प्रीतिमवाप प्रतिपेदे । सर्वकालरमणीयस्वाभाविकसौरभ्याभिरामं देवीवदनं प्राप्य तु लक्ष्मीश्चन्द्रपद्मानुभवजन्यां प्रीतिमाससादेत्यर्थः । लक्ष्म्याः पार्वतीवदनप्राप्तेः पूर्वकालीनं विशेषणमाह—लोलेति । लोला चञ्चला । रात्रौ चन्द्रप्राप्तेरहनि पद्मप्राप्तेश्च नियतावस्थानरहितेत्यर्थः ॥

पुष्पं प्रवालोपहितं यदि स्या-
न्मुक्ताफलं वा स्फुटविद्रुमस्थम् ।
ततोऽनुकुर्याद् विशदस्य तस्या-
स्ताम्रोष्ठपर्यस्तरुचः स्मितस्य ॥ ४३ ॥

(प्रकाशिका)

अथ मुखावयवान् वर्णयति—

पुष्पमिति । अत्र यद्यर्थबलादसिद्धस्यार्थस्य कल्पनमतिशयोक्तिरलङ्कारः । असिद्धौ च तथाविधावुपमानधर्मिणौ ताभ्यामनुकारश्च ॥४३॥

( विवरणम् )

अथ मुखगतानवयवान्[२] वर्णयिष्यन्नादौ मन्दस्मितं वर्णयति—

पुष्पमिति । पुष्पं प्रवालोपहितं मुक्ताफलं स्फुटविद्रुमस्थं वा स्याद् यदि ततस्तस्याः स्मितस्यानुकुर्यात् । पुष्पम् अर्थाद् धवलपुष्पम् । प्रवालोपहितं प्रवाले रक्तपल्लवे उपहितं न्यस्तम् । मुक्ताफलं मौक्तिकम् । स्फुटविद्रुमस्थं स्फुटे स्पष्टकान्तौ भद्रतर इत्यर्थः, विद्रुमे रक्तरत्नविशेषे तिष्ठतीति तथा । 'सुपि स्थः' (३. २. ४) इति कः । वाशब्दो विकल्पे । स्यादिति सम्भावनायां लिङ् । यदिशब्दस्तथाविधस्य धर्मिणोऽभावं सूचयति ।

१. 'प्रंप' घ. पाठः. २. 'वादीन्' घ. पाठः.

ततस्तर्हि । तस्याः पार्वत्याः । स्मितस्य मन्दहासस्यानुकुर्यात् । अत्रापि सम्भावनायां लिङ् । अनुकरणं हि तुल्यतया वर्तनमिति 'तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम्' (२. ३. ७२) इति षष्ठी । स्मितमनुकुर्यादित्यर्थः । प्रवालोपहितधवलपुष्परूपं स्फुटविद्रुमस्थमुक्ताफलरूपं वोपमानधर्मिद्वयं यदि कुत्रचिदुपलभ्येत, तर्हि तयोरन्यतरत् पार्वतीमन्दस्मितमनुकुर्यादित्यर्थः । असिद्धौ च तादृशावुपमानधर्मिणौ। ततश्च तत्कर्तृकमनुकरणमप्यसिद्धमेवेति भावः । ननु किं तादृशोरुपमानधर्मिणोरेवानुकरणसामर्थ्यं, न चन्द्रिकादीनामितीमामाशङ्कां विशेषणद्वयेन परिहरति — विशदस्येत्यादिना । विशदस्यात्यन्तधवलस्येत्यर्थः । विशेषणान्तरमाह—ताम्रोष्ठपर्यस्तरुच इति । ताम्रे रक्ततरे ओष्ठे दन्तच्छदे पर्यस्ता परितः क्षिप्ता रुक् शोभा येन तस्य। चन्द्रिकादीनां तादृशधावल्ये सत्यपि ताम्रद्रव्योपहितत्वाभावान्नानुकरणसामर्थ्यमिति भावः। अत्र यदिशब्दबलादसिद्धस्यार्थस्य कल्पनमिति 'यद्यर्थोक्तौ च कल्पनम्' इत्युक्तोऽतिशयोक्तिभेदोऽलङ्कारः ॥ ४३ ॥

**स्वरेण तस्याममृतस्रुतेव**
**सञ्जल्पितायामभिजातवाचि ।**
**अप्यन्यपुष्टा प्रतिकूलशब्दा**
**श्रोतुर्वितन्त्रीरिव ताड्यमाना ॥ ४४ ॥**

(प्रकाशिका)

स्वरेणेति । सञ्जल्पितायां सञ्जल्पितुमुपक्रान्तायाम् । आदिकर्मणि क्तः । प्रजल्पितायामिति वा पाठः । अभिजातशब्दो लक्षणया सुकुमारार्थः । यथा 'अभूभवाम्भोजदलाभिजात' इति । अन्यपुष्टेति ताड्यमानेति च पाठः । 'तत्रि कुटुम्बधारण' इति धातोः 'अवितृस्तृतन्त्रिभ्य ईः' (उणा० ३. १५८) इति ईप्रत्यये तन्त्रीरिति

भवति। विरुद्धा तन्त्रीर्वितन्त्रीरिति प्रादिसमासः। या तूत्पाद्यस्य स्वरादेर्विहितताडनक्रमं विना यथासम्भवं ताडिता स्यात् तां वितन्त्रीरित्याहुराचार्याः। अमृतस्राविणेव स्वरेण तस्यां संल्लँपितुमुपक्रान्तायां तच्छ्रोतुस्ताड्यमाना वितन्त्रीरिव कोकिलाप्यरम्यशब्दाभवदित्यर्थः। अत्रोपक्रमदशैव तावद् रम्येऽप्यरम्यप्रतिभाकारिणी, किमुत प्रसिद्धस्य तद्धेतोः परिशीलनहेतुरनिवृत्तिदेशन्त्युपक्रमवाचिना प्रत्ययेन द्योत्यते। श्रोतुः श्रोतृमात्रस्यैव, न तु तद्विशेषस्य। अत्र माधुर्यसौकुमार्यसाम्ये सत्यमृतस्रुतेवेति तदतिरेकद्योतिकयोत्प्रेक्षयोपकृतः प्रतिकूलशब्दाभिव्यङ्ग्यो देवीसञ्जल्पितस्य कोकिलारुताद् व्यतिरेकोऽलङ्कारः प्रतीयते ॥ ४४ ॥

(विवरणम्)

वचनं वर्णयति—

स्वरेणेति। अभिजातवाचि तस्याममृतस्रुतेव स्वरेण सञ्जल्पितायामन्यपुष्टापि श्रोतुः प्रतिकूलशब्दा। अभिजातवाचि अभिजातशब्दोऽयं लक्षणया सुकुमारार्थपर्यवासायी। तथा च प्रयोगः 'अभूत्नवाम्भोजदलाभिजात.' इति। अभिजाता सुकुमारा वाग् यस्यास्तस्याम्। अथवा स्थानप्रयत्नादिगुणयोगात् सम्यगुत्पन्ना वाग् यस्यास्तस्याम्। कथ्यमानार्थसमर्थकमिदं विशेषणम्। तस्यां पार्वत्याम्। अमृतस्रुता अमृतं पीयूषं स्रावयतीत्यमृतस्रुत् तेन स्वरेण। अन्तर्भूतण्यर्थः प्रयोगः। सञ्जल्पितायाम् 'आदिकर्मणि क्तः कर्तरि च' (३. ४. ७१)। सम्यग्वक्तुमुपक्रान्तायामित्यर्थः। अनेन देवीसञ्जल्पनस्यारम्भदशायामेवैतावान् प्रभावः, किं पुनः परिशीलनदशायामिति दर्शयति। यथोक्तं सौन्दर्यलहर्याम्—

"विपञ्च्या गायन्ती विविधमपदानं पशुपते-
स्त्वयारब्धे वक्तुं चलितशिरसा साधुवचने!।

१. 'जल्पितु' घ. पाठः.

तदीयैर्माधुर्यैरपहसिततन्त्रीकलरवां
निजां वीणां वाणी निचुलयति चोलेन निभृतम् ॥"

इति । अन्यपुष्टा कोकिला । यस्याः शब्दो माधुर्यसौकुमार्यादिगुणवत्तया प्रसिद्धः, सापीत्यपिशब्दार्थः । श्रोतुः श्रोतृमात्रस्य । विशेषज्ञस्य किं पुनरिति भावः । प्रतिकूलशब्दा प्रतिकूलो विरुद्धः शब्दो यस्याः सा तथा । आसीदिति शेषः । उक्तमर्थमुपमया स्फुटयति—ताड्यमाना वितन्त्रीरिवेति । ताड्यमाना शास्त्रानभिज्ञैराहन्यमाना । विरुद्धा तन्त्रीर्वितन्त्रीरिति प्रादिसमासः । 'तत्रि कुटुम्बधारणे' इति धातोः 'अवितृस्तृतन्त्रिभ्य ईः' । (उणा०. ३. १५८) इति ईप्रत्यये तन्त्रीरिति पदम् । तन्त्रीरिति च वीणागुण उच्यते ।

"उत्पाद्यानां स्वरादीनां विहितं ताडनक्रमम् ।
विना या ताड्यते मन्दैः सा वितन्त्रीरिहोच्यते ॥ "

इत्याहुराचार्याः । देवीवचनान्तराले सञ्जल्पन्ती कोकिलापि वीणायाः समीचीनवादनवेलायामक्रमताडिता वीणागुणवल्लरीव श्रोतृजनानामरुन्तुदमेव शब्दमुत्पादयामासेति भावः । अत्रामृतस्रुतेवेत्युत्प्रेक्षा माधुर्यसौकुमार्यादिगुणैः परभृताविरुताद् देवीसञ्जल्पितस्य व्यतिरेकं द्योतयति, प्रतिकूलशब्दश्च तमभिद्योतयतीति व्यतिरेकालङ्कारो ध्वन्यते ॥ ४४ ॥

**प्रवातनीलोत्पलनिर्विशेष-**
**मधीरविप्रेक्षितमायताक्ष्या ।**
**तया गृहीतं नु मृगाङ्गनाभ्य-**
**स्ततो गृहीतं नु मृगाङ्गनाभिः ॥४५॥**

(प्रकाशिका)

**प्रवातेति** । अधैर्यप्रतिवस्तुतया प्रवातसम्बन्ध उपात्तः । ससन्देहोऽत्रालङ्कारः । 'ससन्देहस्तु भेदोक्तौ तदनुक्तौ तु संशय'

१. 'च' ख. घ. पाठः.

इति। नन्वत्र नुशब्दो वितर्कद्योतकः। वितर्कश्च भोजराजेन पृथगलङ्कारत्वेनोक्तः। उच्यते। नुशब्दोऽयमुभयं द्योतयति वितर्कं संशयं च। अत्र भोजः—'कः पुनर्वितर्कसंशययोर्भेदः। उच्यते। निर्णयासन्नो[1] वितर्कः। वितर्कासन्नः संशयः। संशयान्तो हि वितर्कस्य कोटिमारुह्य ततो विभ्रष्टस्तत्त्वं चाभिनिविशते। शब्दाश्च किंस्विदित्यादयस्तुल्यरूपा एव संशयवितर्कयोरिति दुरवबोधस्तद्विशेष' इति। अत एवास्मदलङ्कारकृता ससन्देहात् पृथगलङ्कारत्वेन वितर्को नोक्तः। विशेषणानां संशयाङ्गत्वं द्रष्टव्यम्॥ ४५॥

(विवरणम्)

कटाक्षं वर्णयति—

प्रवातेति। प्रवातनीलोत्पलनिर्विशेषम् अधीरविप्रेक्षितम् आयताक्ष्या तया मृगाङ्गनाभ्यो गृहीतं नु मृगाङ्गनाभिस्ततो गृहीतं नु। प्रवातनीलोत्पलनिर्विशेषं प्रकृष्टोऽधिको वातो यस्मिन् देशे स प्रवातः, तत्रत्यं नीलोत्पलं प्रवातनीलोत्पलं, तेन निर्विशेषं विशेषरहितं, सदृशमिति यावत्। अधीरविप्रेक्षितम् अधीरं चपलं यद् विप्रेक्षितं विलोकनम्। भावे निष्ठा। तद् आयताक्ष्या आयते विशाले अक्षिणी यस्यास्तया। अनेन नेत्रस्यापि मृगनेत्रसादृश्यं दर्शितम्। तेन च नेत्रस्वरूपवर्णनमपि कविः कृतवानित्यवसेयम्। तया पार्वत्या मृगाङ्गनाभ्यः मृगीभ्यः सकाशाद् गृहीतं स्वीकृतं नु। नुशब्दः संशयवाचकः। मृगाङ्गनाभिर्मृगस्त्रीभिः ततः पार्वतीसकाशात्। उभयत्रापि 'आख्यातोपयोगे' (१.४.२९) इति पञ्चमी। गृहीतं स्वीकृतं नु। चारुमारुतावधूयमानचञ्चलेन्दीवरसदृक्षं कटाक्षविक्षेपणं किं तया मृगाङ्गनासकाशाद् गृहीतम् उत मृगाङ्गनाभिस्तत्सकाशादितीमं विशेषं निपुणतरं निरूपयन्तोऽपि वयं नावगच्छाम इति भावः। अत्राधीरप्रतिवस्तुतया प्रवातग्रह-

---

१. 'नो वि' क. पाठः. २. 'रमात्रस' ग. घ. पाठः.

यम् । आयताक्ष्या इति विसर्गान्तपाठे आयताक्ष्याः प्रवातनीलोत्पलनिर्विशेषमधीरविप्रेक्षितमित्यन्वयः । सन्देहोऽत्रालङ्कारः 'विषयस्य सन्दिह्यमानत्वे सन्देह' इति । विशेषणसन्देहोऽङ्गम् ॥ ४५ ॥

तस्याः शलाकाञ्जननिर्मितेव
कान्तिर्भ्रुवोरानतरेखयोर्या ।
तां वीक्ष्य लीलाचतुरामनङ्गः
स्वचापसौन्दर्यमदं मुमोच ॥ ४६ ॥

(प्रकाशिका)

तस्या इति । शलाकाग्रस्थेन हरितालद्रवादिना निर्मितस्य चित्रादेर्निर्मातृमनोनुकूला शोभा भवतीति शलाकाञ्जननिर्मितत्वमुत्प्रेक्ष्यते । आनता कुटिला रेखा सन्निवेशो ययोः । लीलाभिर्विलासैश्चतुराम् । अत्रापि शोभासन्निवेशविशेषाभ्यां साम्ये सत्यनङ्गचापाद् देवीभ्रुवोर्लीलाचतुरत्वेनाधिक्येन तां वीक्ष्येत्यादिना व्यतिरेक उक्तः । अत्र सा यां वीक्ष्येति[२] पठितव्यमिति कश्चित् सुधीः । एवं हि वाक्यस्य प्रकृतपर्यवसायित्वं भवतीति ॥ ४६ ॥

( विवरणम् )

भ्रुवौ वर्णयति—

तस्या इति । तस्याः भ्रुवोः कान्तिः सा । तस्याः पार्वत्याः भ्रुवोः भ्रूयुगलस्य कान्तिः शोभा सा तथाविधेत्यर्थः । अवाङ्मनसगोचर इति भावः । अत एवोत्प्रेक्षते—शलाकाञ्जननिर्मितेवेति । शलाका चित्रलेखन-

---

१. 'भातिशयस' ख. घ. पाठः. २. 'ति क' ख. पाठः.

साधनं, शलाकाग्रावस्थितमञ्जनं शलाकाञ्जनं, तेन निर्मितेव । शलाकाग्रवर्तिना हरितालद्रवादिना लिखितं हि चित्रं निर्मातृजनमनोनुकूलं भवतीति सन्निवेशविशेषसौन्दर्यमुत्प्रेक्षाफलम् । तादृशं सन्निवेशविशेषमेव विशेषणेनाह—आनतरेखयोरिति । आनता कुटिला रेखा सन्निवेशो ययोस्तयोः । भ्रशोभाया अवाङ्मनसगोचरत्वमेव द्रढयति—अनङ्गो यां वीक्ष्य स्वचापसौन्दर्यमदं मुमोचेति । अनङ्गो मन्मथः यां भ्रकान्तिं वीक्ष्यावलोक्य स्वचापसौन्दर्यमदं स्वस्य चापस्य यत् सौन्दर्यं मनोहारित्वं, तेन यो मदः आत्मश्लाघिता, तं मुमोच त्यक्तवान् । तत्र हेतुमाह—लीलाचतुरामिति । लीलया विलासेन चतुरां सुन्दरीम् । 'चतुरौ दक्षसुन्दरौ' इति वैजयन्ती । अनेन विशेषणेन गुणान्तरसाम्ये सत्यपि देवीभ्रुवोरनङ्गचापाद् व्यतिरेकः प्रतिपादितः । 'कान्तिर्भ्रुवोरानतरेखयोर्या तां वीक्ष्ये'ति पाठे पुनरेकवाक्यतया योजना । अत्र व्यतिरेकोऽलङ्कारः ॥ ४६ ॥

लज्जा तिरश्चां यदि चेतसि स्या-
दसंशयं पर्वतराजपुत्र्याः ।
तं[2] केशपाशं प्रसमीक्ष्य कुर्यु-
र्वालप्रियत्वं शिथिलं चमर्यः ॥ ४७ ॥

(प्रकाशिका)

लज्जेति । तत् तस्मात् । अत्राप्यतिशयोक्तिभेदः प्रागुक्तोऽलङ्कारो व्यतिरेकश्च गम्यते[3] । वाक्यार्थयोश्चात्र लोकसिद्धः कार्यकारणभावः—योऽधिकगुणदर्शनाल्लज्जितः, स स्वगुणेषु नादरं कुर्वीतेति ॥ ४७ ॥

(विवरणम्)

केशपाशं वर्णयति—

लज्जेति । तिरश्चां चेतसि लज्जा स्याद्यदि तत् चमर्यः पर्वतराजपुत्र्याः

१. 'राम् । अ' ग. घ. पाठः. २. 'तं के' इति मुद्रितपुस्तकपाठः. ३. 'ते ॥ ए' क. पाठः.

केशपाशं प्रसमीक्ष्य वालप्रियत्वं शिथिलं कुर्युः असंशयम्। (तिरश्चां) तिर्यग्योनिजानां पश्वादीनां चेतसि मनसि लज्जा अपत्रपा। स्यादिति सम्भावनायां लिङ्। यदीति यच्छब्दस्य प्रतियोगिनं तच्छब्दं निर्दिशति—तदिति। तर्हीत्यर्थः। पर्वतराजपुत्र्याः पर्वतानां राज्ञः पुत्र्याः पार्वत्याः केशपाशं प्रशस्तं केशम्। 'पाशः पक्षश्च हस्तश्च कलापार्थाः कचात् परे' इत्यमरः। प्रसमीक्ष्य प्रकर्षेण सम्यक् चावलोक्य। अत्र प्रकर्षेणावलोकनं नाम देव्याश्चमरीणां च हिमवत्पार्श्ववर्तित्वादनवरतावलोकनम्। देवीकेशपाशगतानां स्वाभाविकसौरभ्यादिगुणयोगित्वादीनां स्ववालेष्वभावावगमपर्यन्तमवलोकनं सम्यगवलोकनम्। तस्मात् सम्यगवलोकनं प्रकर्षावलोकनसाध्यमिति प्रशब्दस्य पूर्वनिर्देशः। चिरपरिचयवशाद् देवीकेशपाशगतान् विशेषगुणान् विविच्यावगम्येत्यर्थः। अत्र विविच्यावलोकनमारोपितम्। वालप्रियत्वं वालो लाङ्गूलं प्रियो यासां ताः वालप्रियाः, तासां भावस्तत्त्वम्। 'त्वतलोर्गुणवचनस्य पुंवद्भावो वक्तव्यः'(वा०. ६. ३. ३५) इति पुंवद्भावादत्र टापो निवृत्तिः। शिथिलमल्पं कुर्युः। अत्रापि सम्भावनायां लिङ्। असंशयं, नात्र सन्देह इत्यर्थः। यो हि गुणाधिकदर्शनेन लज्जितः, (सः) स्वगुणेषु नादरं करोतीति लोकसिद्धम्। तत्र यदि मनुष्यादीनामिव पश्वादीनामपि गुणाधिकदर्शनेन[२] लज्जा भवेत्, तर्हि चमर्यो देवीकेशपाशदर्शनानन्तरं स्ववालेषु कदाचिदपि नादरं कुर्वीरन्नित्यर्थः। चमरीणां देवीकेशपाशदर्शने सत्यपि यदेताः स्वलाङ्गूलेष्वादरं कुर्वन्ति, तिर्यग्योनिजातानामेतासां लज्जाभाव एव तत्र हेतुरिति भावः। अत्र 'पुष्पं प्रवालोपहितं यदि स्याद्' इत्यत्र प्रतिपादितोऽतिशयोक्ति[३]भेदोऽलङ्कारो[४] व्यतिरेकश्च ध्वन्यते॥४७॥

**सर्वोपमाद्रव्यसमुच्चयेन**
**यथाप्रदेशं विनिवेशितेन।**

---

१. 'शं प्र' ग. घ. पाठः. २. 'ने ल' ग. घ. पाठः. ३. 'क्तिरल' क. ख. ग. पाठः. ४. 'रः' ॥ इ' क. ख. ग. पाठः.

**सा निर्मिता विश्वसृजा प्रयत्ना-**
**देकस्थसौन्दर्यदिदृक्षयेव ॥ ४८ ॥**

(प्रकाशिका)

एवं दिङ्मात्रदर्शनाय कांश्चित् प्रधानावयवाननुवर्ण्योक्तानुक्तावयवसाधारण्या वर्णनया प्रकरणमुपसंहरति—

**सर्वोपमेति** । उपमाद्रव्यं प्रागुक्तं चन्द्रकमलादि, अनुक्तं च नासादिगतिवस्तुतिलकुसुमादि, तस्य समुच्चयः समाहारः[1] समूह इत्येकोऽर्थः । (तेन) यथाप्रदेशं यथाशब्दः पदार्थानतिक्रमे । प्रदेशो विषयः । स्वस्वोचितप्रपदादिविषयानतिक्रमेणेत्यर्थः । विनिवेशितेन तिर्यगूर्ध्वादिविशेषतो निवेशितेन । अन्यथा परस्परसाङ्कर्यानौचित्याभ्यां सौन्दर्यव्यतिरेकाभावः स्यात् । अनेन निर्मातुरवधानातिशयो ध्वन्यते । विश्वसृजेति, तस्य किमशक्यमिति भावः । प्रयत्नात् प्रकृष्टं यत्नमवलम्ब्य । एवं निर्माणे हि तस्यापि महता यत्नेनावश्यं भाव्यमिति भावः । एकस्थस्य एकावयविस्थितस्य सौन्दर्यस्य,[2] अर्थात् सर्वोपमाद्रव्यगतस्य सर्वस्यैव । अन्यथा त्वसमुच्चयेऽप्येकैकस्थस्य सौन्दर्यस्य खण्डशो द्रष्टुमशक्यत्वात् । अत्राखण्डसौन्दर्यदिदृक्षामूलैवंविधविधिनिर्माणोत्प्रेक्षया देव्यामखण्डसौन्दर्याध्यासः प्रतीयते ॥ ४८ ॥

(विवरणम्)

इत्थं दिङ्मात्रप्रदर्शनार्थं देव्याः कांश्चन प्रधानावयवाननुवर्ण्य विस्तरभिया महाकविरनुक्तानामुक्तानां चावयवानां साधारणवर्णनेन प्रकृतमङ्गवर्णनमुपसंहरति—

**सर्वोपमेति** । विश्वसृजा सा एकस्थसौन्दर्यदिदृक्षया प्रयत्नाद् यथाप्रदेशं विनिवेशितेन सर्वोपमाद्रव्यसमुच्चयेन निर्मितेव । विश्वसृजा विश्वं सृजतीति विश्वसृट् (तेन) सकलजगन्निर्माणकर्मठेन ब्रह्मणा । तस्य किं दुष्करमिति

---

१. 'रइ' क. पाठः. २. 'स्थस्य' क. ख. ग. पाठः.

भावः। सा पार्वती। एकस्थसौन्दर्यदिदृक्षया एकस्थस्यैकस्मिन्नेवावयविनि वर्तमानस्य सौन्दर्यस्य सर्वोपमाद्रव्यगतस्येत्यर्थात् सिध्यति, द्रष्टुमिच्छया। हेतौ तृतीया। न हि पृथक्पृथगवस्थापने पुञ्जीकृत्यावस्थापनेऽपि सुकुमाराणां चन्द्रकमलादीनां सौन्दर्यमेकस्मिन्नेवावयविनि वर्तमानतया द्रष्टुं शक्यमिति भावः। प्रयत्नात् ल्यब्लोपे पञ्चमी, प्रयत्नमवलम्ब्येत्यर्थः। यथाप्रदेशं यथा-शब्दः पदार्थानतिक्रमे। प्रदेशो मुखादिस्थानं, तत्तदुचितप्रदेशानतिक्रमेणे-त्यर्थः। विनिवेशितेन विशब्दो विशेषवाची, तिर्यगूर्ध्वादिविशेषेण निवेशितेन स्थापितेन। पदादिस्थाने पद्मादीनामधोमुखतया स्थापनं, नयनादिस्थाने कुवलयादीनां तिर्यगवस्थापनमित्यादिविशेषेणेत्यर्थः। अनेन विश्वसृ-जोऽपि सावधानत्वं ध्वन्यते। सर्वोपमाद्रव्यसमुच्चयेन सर्वेषां न तु केषा-ञ्चिद्, उपमाद्रव्याणां चन्द्रकमलादीनाम्, अनुक्तानां नासादिप्रतिवस्तुभू-तानां तिलकुसुमादीनामप्युपादानार्थं सर्वशब्दः, समुच्चयेन समाहारेण। 'समाहारः समुच्चय' इत्यमरः। समूहेनेत्यर्थः। करणार्थे तृतीया। निर्मिता सृष्टेव। अत्र ततइतो विप्रकीर्णानि चन्द्रकमलाद्युपमाद्रव्याणि प्रयत्नादेकत्र समानीय पुनश्च तानि यथोचितप्रदेशं रमणीयतया विन्यस्य ब्रह्मणस्तदङ्ग-निर्माणमित्युत्प्रेक्ष्यते, एकस्थसौन्दर्यदिदृक्षा तु तत्र हेतुत्वेन। अनेनोत्प्रे-क्षाद्वयेन च देवीसौन्दर्यस्य लोकोत्तरत्वं ध्वन्यते॥४८॥

**तां नारदः कामचरः कदाचित्**
**कन्यां किल प्रेक्ष्य पितुः समीपे।**
**समादिदेशैकवधूं भवित्रीं**
**प्रेम्णा शरीरार्धहरां हरस्य॥४९॥**

(प्रकाशिका)

अथैतत्प्रकरणमुपयोजयन् प्रकरणान्तरमारभते —

---

१. 'स्थस्य सौन्दर्यस्यै' ग. घ. पाठः. २. 'स्थाने' घ. पाठः.

तामिति। तामेवंविधगुणविशिष्टाम्। कामचर इति दर्शनस्य यादृच्छिकत्वे हेतुः। कदाचिदिति यादृच्छिकत्वम्। कन्यामिति कन्यानां दर्शने हि तत्पित्रादिप्रीतये तत्प्रवृत्तये वा भाविनमर्थमादिशन्ति सन्तः, लोकदृष्ट्यनुसारेणैव नारदस्य तद्दर्शनादिकमिति च ध्वन्यते। अन्यथा कथं शिवयोरासन्नसेवकः स तयोस्तत्त्वं न विजानीयात्। तौ हि तत्त्वतो नित्यव्यतिषक्तावेवेति सोऽन्य एव परमार्थः। किलशब्दो वार्तायाम्। पितुः समीप इति दर्शनोपपत्त्यर्थम्। आदेशो भाव्यर्थशंसनम्। एकामद्वितीयां वधूं भार्याम्। भवित्रीं भाविनीम्। अयमादेशप्रकारः। इदमेव तावन्मनोरथस्याप्यविषयः। इतोऽप्यपरमस्तीत्याह—प्रेम्णेति। प्रेम्णा, न तु दाक्षिण्यादिना। शरीरस्यार्धहरामिति विग्रहः। अन्यथा अर्धशब्दस्य समप्रविभागवाचित्वे सति 'अर्धं नपुंसकम्' (२. २. २) इति समासकरणादर्धशरीरहरामिति स्यात्। हरस्येत्यत्र तु यथाबुद्धि व्यङ्ग्योऽर्थोऽनुसर्तव्यः, न तु संज्ञिमात्रम्॥ ४९॥

(विवरणम्)

अथैतत्प्रकरणोपयोगि प्रकरणान्तरमारभते—

तामिति। नारदः कदाचित् तां कन्यां पितुः समीपे प्रेक्ष्य हरस्यैकवधूं भवित्रीं समादिदेश किल। नारद इत्यनेन श्रद्धेयवाक्यत्वमुक्तम्। स हि परमेश्वरस्यासन्नसेवकः। कदाचिदित्यनेन नारदस्य यादृच्छिकमागमनं प्रतिपादितम्। तां पूर्वोक्तसकलगुणविशिष्टाम्। अनेन हरयोग्यत्वमुक्तम्। कन्यामित्यनेन पितुस्तदुचितभर्तृचिन्ता व्यज्यते। तत एव नारदस्य समादेशावकाशश्च ध्वन्यते। सन्तो हि कन्यादर्शने पित्रादिप्रीतये भाविनमर्थमादिशन्ति। पितुः हिमवतः समीपे। अनेन नारदस्य देवीदर्शनोपपत्तिरुक्ता। प्रेक्ष्य सम्यगवलोक्य। अनेन नारदस्य तद्गुणावलोकनं तादृशादेशे हेतुरिति

१. 'वंगु' ङ पाठः. २. 'क्तावयवावे' ङ. पाठः. ३. 'मति व्य' ङ. पाठः. ४. 'शादे क. ख. ग. पाठः

लोकदृष्ट्यनुसारो व्यज्यते। हरस्य परमेश्वरस्य एकवधूम् एकामद्वितीयाम्, अनेन पत्न्यभाव उक्तः, वधूं भार्याम्। 'वधूर्जाया स्नुषा स्त्री चे'त्यमरः। भवित्रीं भाविनीम्। समादिदेश सम्यगादिदेश। अत्र भाव्यर्थकथनमादेश इत्युच्यते। तत् कृतवानित्यर्थः। एषा हरवधूर्भविष्यतीति स्पष्टमेवोक्तवानित्यर्थः। किलेत्यनेन पुराणप्रसिद्धोऽयमर्थ इति ध्वन्यते। एतावन्मात्रमपि पितुर्मनोरथस्याप्यविषयः। ततोऽप्यधिकं किञ्चिदस्तीत्याह—प्रेम्णा शरीरार्धहरामिति। प्रेम्णा स्नेहेन, न तु दाक्षिण्यादिनेति भावः। 'प्रेम स्नेह' इत्यमरः। शरीरार्धहरां, नन्वत्र समांशविवक्षायामर्धशरीरहरामिति वक्तव्यम्। 'अर्धं नपुंसकम' (२. २. २) इति समस्यमानस्यार्धशब्दस्योपसर्जनत्वेन पूर्वनिपातस्यावश्यम्भावात्। अर्धशब्दस्य पुल्लिङ्गत्वे तु शरीरैकदेशहरामित्येवार्थः स्यात्। 'अर्धं समेंऽशक' इत्यमरसिंहवचनात्। मैवम्। शरीरस्यार्धहरामिति विग्रहस्वीकारात्। नारदस्य यादृच्छिकदेवीदर्शने हेतुमाह—कामचर इति। कामं चरतीति कामचरः॥ ४९॥

**गुरुः प्रगल्भेऽपि वयस्यतोऽस्या-**
**स्तस्थौ निवृत्तान्यवराभिलाषः।**
**ऋते कृशानोर्न हि मन्त्रपूत-**
**मर्हन्ति तेजांस्यपराणि हव्यम्॥ ५०॥**

(प्रकाशिका)

ततः किमित्याह—

**गुरुरिति। प्रगल्भे प्रौढे वयसि प्रकृते यौवने। अतो नारदवचनात्। तस्थौ व्याकुलतामत्यजत्। निवृत्तोऽन्यस्मिन् देवव्यतिरिक्ते वरे वोढर्यभिलाषो यस्य। अयमर्थः—प्रथमं प्रौढयौवनां तां दृष्ट्वानुरूपस्य कस्यचिद्वरस्याभिलषितत्वान्निरूप्यमाणस्यापि तस्यान्यस्य लोके-**

१. 'के दे' घ. पाठः.

ऽनुपलम्भादनुरूपस्य च देवस्य मनोरथानामप्यविषयत्वादसौ व्याकुलोऽभूत्। पश्चान्नारदवचनाद् देवे भाविनि वर उपलब्धे निवृत्तान्यवराभिलाष एव भूत्वा निर्व्याकुलोऽभूदिति । युक्तञ्चैतदित्याह — ऋत इति । हविषि मन्त्रपूतत्वमपरानर्हत्वे हेतुः । प्रकृते तु प्रकरणप्रतिपादितो विश्वातिशायी गुणग्रामः ॥ ५० ॥

(विवरणम्)

नारदादेशानन्तरं पितुः प्रवृत्तिमाह—

गुरुरिति । गुरुरतोऽस्याः प्रगल्भे वयस्यपि निवृत्तान्यवराभिलाषस्तस्थौ। गुरुः पिता हिमवान् अतो विश्वसनीयनारदादेशाद्धेतोः अस्याः पार्वत्याः प्रगल्भे प्रौढे वयसि, यौवन इत्यर्थः। अपिशब्दो दुहितुर्यौवनावस्थायां पितुस्तथावस्थानस्यासम्भवं द्योतयति । तस्य च मुनिवचनमेव हेतुरिति सूचयति—निवृत्तान्यवराभिलाषः (इति)। निवृत्तो व्यावृत्तः अन्यस्मिन् भगवद्व्यतिरिक्ते वरे विवाहकर्तरि अभिलाषो यस्य तथाविधः सन् तस्थौ। 'ष्ठा गतिनिवृत्तावि'ति धातुः । मनोव्यापारनिवृत्तिरेवात्र विवक्षिता । लोकातिशायिलावण्यामारूढयौवनां च तनयामेवमवलोकयन् हिमवान् भगवद्व्यतिरिक्तस्य कस्यचिदपि देव्या असमानत्वाद्, भगवतस्तु मनोरथानामप्यविषयत्वात् को वा मे दुहितुर्भर्ता भविष्यतीति व्याकुलोऽभूत् । नारदादेशानन्तरं तु निर्व्याकुलोऽभूदिति भावः । युक्तं चैतदित्याह—मन्त्रपूतं हव्यं कृशानोर्ऋते अपराणि तेजांसि नार्हन्तीति । मन्त्रैः पूतं मन्त्रपूतम् । एतच्चान्यानर्हत्वे हेतुः । देव्याः पूर्वप्रतिपादितविश्वातिशायिगुणगणप्रतिवस्तुभूतं चेदं विशेषणम् । हव्यं हविः कृशानोर्ऋते अग्निं विना । 'अन्यारादितरर्ते'-(२.३.२९) इति पञ्चमी । अपराण्यन्यानि तेजांसि सूर्याचन्द्रमसादीनि

१. 'यन् भ' ग. घ. पाठः. २. 'ना अप' घ. पाठः. ३. 'र्यचन्द्रादी' ग. घ. पाठः.

नार्हन्ति। हिशब्दः प्रसिद्धौ। यथा मन्त्रपूतं हविः कृशानुरेवार्हति, तथा तामपि हर एवेति भावः ॥५०॥

**अयाचितारं न हि देवदेव-**
**मद्रिः सुतां ग्राहयितुं शशाक।**
**अभ्यर्थनाभङ्गभयेन साधु-**
**र्माध्यस्थ्यमिष्टेऽप्यवलम्बतेऽर्थे ॥ ५१ ॥**

(प्रकाशिका)

तर्हि किमसौ स्वयं कन्यया देवं नोपस्थितवानित्याह—

**अयाचितारमिति**। अभ्यर्थनाभङ्गः प्रत्याख्यानम्। साधुर्ज्ञानी। माध्यस्थ्यमप्रवृत्तिम्। अत्र देवगतस्यायाचनस्य अद्रिगतस्य कन्याग्राहणाशक्तत्वस्य च कार्यकारणभावः

"अयाचितानि देयानि सर्वद्रव्याणि भारत!।
अन्नं विद्या तथा कन्या अनर्थिभ्यो न दीयते ॥"

इत्यागमसिद्धः। अत्र प्रत्युपसृष्टस्य गृह्णातेः प्राप्त्यर्थत्वाद् 'गतिबुद्धि-' (१.४.५२) इत्यादिसूत्रेण कर्मसंज्ञायां देवमिति द्वितीयेति दक्षिणावर्तः। वयं त्वनुपसृष्टस्यापि प्राप्त्यर्थत्वं मन्यामहे। तथा 'च देवदेवमद्रिः सुतां ग्राहयितुमि'ति महिमा पपाठ। एवञ्च—

"तमादौ कुलविद्यानामर्थमर्थविदां वरः।
पश्चात् पार्थिवकन्यानां पाणिमग्राहयत् पिता ॥"

इत्यत्रोत्तरवाक्ये दक्षिणावर्तदर्शितो विभक्तिविपरिणामो न कार्यः ॥५१॥

(विवरणम्)

ननु यदि हर एवास्याः पतिरिति नारदादेशादवगतं हिमवता तर्हि केन कारणेनासौ स्वयमेव कन्यया न देवमुपस्थितवानत आह—

---

१. या न देवमुप' ङ. पाठः. २. 'ह्नया दे' क. पाठः. ३. 'रम्' क. पाठः. ४. 'कृतो' क. पाठः.

अयाचितारमिति । अद्रिः सुतामयाचितारं देवं प्रतिग्राहयितुं न हि शशाक । अद्रिः हिमवान् अयाचितारं याचनं करोतीति याचिता, ततोऽन्यम् अयाचितारं देवं परमेश्वरं सुतां तनयां प्रतिग्राहयितुम् । अत्र 'गतिबुद्धि—' (१.४.५२) इत्यादिसूत्रे ग्रहेरनुपादानाद् देवं प्रतिग्राहयितुमिति द्वितीयानुपपत्तेः प्राप्त्यर्थत्वमेव युक्तम् । तत् तु प्रत्युपसर्गवशादिति दक्षिणावर्तः । अरुणाचलनाथस्तु —निरुपसर्गस्यापि ग्रहेः प्राप्त्यर्थत्वमुक्तवान् । सुतां देवं प्रापयितुमित्यर्थः । हिशब्दोऽवधारणे । नैव शक्तोऽभूदित्यर्थः ।

"अयाचितानि देयानि सर्वद्रव्याणि भारत ।
अन्नं विद्या तथा कन्या अनर्थिभ्यो न दीयते ॥"

इति वचनादिति भावः । अत्रार्थान्तरन्यासमाह—मानी इष्टे अर्थे अभ्यर्थनाभङ्गभयेन माध्यस्थ्यमवलम्बत इति । मान्यभिमानी जनः इष्टे स्वसाध्यभूतेऽर्थेऽपीत्यर्थः । अभ्यर्थना याचना, तस्यास्तु भङ्गः प्रत्याख्यानं, तस्माद् भयेन । न वयमस्यां सक्ता इत्यादिवचनभयादिति भावः । मध्यस्थस्य भावो माध्यस्थ्यमौदासीन्यमिति यावत् । मानिनो हि जना निजाभिलषितेऽप्यर्थे प्रत्याख्यानभिया नातीव प्रयतन्त इत्यर्थः ॥ ५१ ॥

**यदैव पूर्वे जनने शरीरं**
**सा दक्षरोषात् सुदती ससर्ज ।**
**तदाप्रभृत्येव विमुक्तसङ्गः**
**पतिः पशूनामपरिग्रहोऽभूत् ॥ ५२ ॥**

(प्रकाशिका)

इत्थं सकलजगदेकनायिकायाः प्रबन्धनायिकायाश्चरितमुपवर्ण्य तत्प्रसङ्गेन नायकस्य वृत्तान्तमवतारयति । तत्र चायं प्रसङ्गः — एवंविधां पूर्वपत्नीं किमयं देवः स्वयं भूधरेन्द्रं न याचितवानिति ।

यदैवेति। दक्षिणावर्तेनोक्तं 'दक्षरोषात्तु सतीति पाठः। तुशब्दोऽवधारणे। सतीति तादात्विकं नामे'ति। तत्पाठे तुशब्दः प्रकरणान्तरोपक्रमद्योतको युक्तः। यथा महाभारते 'कृत्वा विवाहं तु कुरुप्रवीरा' इति, 'कृतशौचं तु राजानं धर्मात्मानमि'ति च। रामायणेऽपि 'प्रविश्य तु महारण्यं दण्डकारण्यमि'ति। सती सेत्यन्वयः। सुदतीति पाठे सुदतीशब्दस्य वयोवस्थाविशेषवाचित्वान्निरुपयोगता। देवतानां वयोवस्थाया अविशेषात्। यद्वा वयोवस्थया देवं प्रति देव्या अपर्याप्तभुक्तत्वं लक्ष्यते। तच्च निर्वेदकारणम्। अपर्याप्तभुक्तस्येष्टस्य वस्तुनो झटित्यत्यन्तनाशः सत्त्ववतां सर्वतो निर्वेदाय हि भवति। सङ्गत्यागश्च निर्वेदः। अपरिग्रहो ममत्वरहितः। ममत्वं हि सङ्गस्य कार्यम्। पशूनां पतिरित्यनेन सकलचेतनप्रवृत्तिनिवृत्तिकर्णधारस्यास्य कथमपरिग्रहत्वमिति कथं वास्य मायाकार्ये परिग्रह इति वा सोत्प्रासोक्तिर्व्यज्यते। अत्र देवीदेहत्यागो देवस्य सङ्गत्यागे कारणम्। तथाहि—प्रकृष्टशोकाभिभूताः सन्तः सत्त्ववन्तः प्रत्यवमर्शिकया सत्त्वात्मिकया दृष्ट्या विषयेषु दोषान् पश्यन्तः सर्वतो निर्विद्यन्ते। किञ्च जनयिता च विप्रियाचरणेन देहत्यागहेतुर्जातः। तस्मात्—

"यावतः कुरुते जन्तुः सम्बन्धान् मनसः प्रियान्।
तावन्तोऽस्य निखन्यन्ते हृदये शोकशङ्कवः॥"

इति न्यायेन सम्बन्धः सर्वतो दुःखावह इति देहत्यागस्य सङ्गत्यागहेतुत्वं समर्थयितुं प्रकरणसिद्धोऽपि दक्षरोषो हेतुरुपात्तः। तर्हि तद्देहत्यागस्य हेतुत्वमात्रे वक्तव्ये तदैव प्रभृतीति कालनियमोपक्रमवाचीनि पदानि किमर्थमुपात्तानि। उच्यते। अत्र तदेति निर्दिष्टस्य कालविशेषस्यैव

१. 'करणाद्यो' क. ख. ग. पाठः. २. 'पि' ङ. पाठः. ३. 'न्धाः' ङ. पाठः. ४. 'खहेतव इ' ङ. पाठः.

शाब्दं हेतुत्वम् । अव्ययत्वात्तु विभक्त्यश्रवणम् । कालो हि सकलभावानां प्रवृत्तिनिवृत्तिहेतुत्वेनेष्टः । अत एव तस्य नैमित्तिकाधिकरणत्वं 'मधौ माद्यन्ति कोकिला' इत्यादाविच्छन्ति शाब्दिकाः । देहत्यागस्य तु कालविशेषणत्वादार्थं हेतुत्वम् । विशेषणे हि तात्पर्यं भवति । एवशब्दस्तु तस्यैव कालस्य हेतुत्वमिति द्योतनाय । यद्यपि सर्ववाक्यानां सावधारणत्वं, तथापि व्यवच्छेद्यसम्प्रोत्कटत्वेन आद्यावधारणस्य विवक्षितत्वद्योतनाय तद्वाचि पदं प्रयुज्यते । अत्र देहत्यागस्य परम्परया सङ्गत्यागं प्रति हेतुत्वे कालान्तरस्य हेतुत्वं, साक्षात्तु हेतुत्वे तद्विशिष्टस्यैव कालस्य हेतुत्वमिति विकल्पेन कालद्वयप्राप्तावप्यवधारणस्य विवक्षितत्वम् । नन्वेवमेक एव तच्छब्दनिकटस्थ एवशब्द उपादेयः, न त्वाद्यः, अर्थविशेषाभावात् । नैवम् । अनुवाददशायामपि कालविशेषधर्मस्यावधारणस्य वक्तृबुद्ध्युद्रेकेणावभासमानत्वात् । तथा च शिष्टप्रयोगः— 'येव त्वं हि पुरा जाता सैव त्वं हि शिखण्डिनी'ति । प्रभृतिशब्दस्याभावे तु सङ्गत्यागस्यानुवृत्तिर्न प्रतीयेत । तस्मात् त्रितयमप्युपादेयम् । इतःप्रभृति स्वेच्छापरिगृहीतधीरोदात्तावस्थस्य देवस्य लोकानुग्रहहेतावितिवृत्त आधिकारिकतया वर्ण्यमाने दयावीरो रसोऽङ्गी । तदन्येषामङ्गत्वम् । अत्र पूर्वप्रवृत्तत्वेन सूचितस्य शृङ्गारस्य विरोधी तपश्चर्यानुभावकः शान्तो रसस्तृतीयसर्गान्तं यावदनुवर्तते । तयोश्च विरोधस्तदुभयाविरुद्धेन देवीदेहत्यागसूचितेन मध्ये पतता करुणेन प्रशमितः । तदुक्तं ध्वनिकृता—

"रसान्तरान्तरितयोरेकवाक्यस्थयोरपि ।
निवर्तते हि रसयोः समावेशे विरोधिता ॥"

इति ॥ ५२ ॥

(विवरणम्)

इत्थमखिललोकनायिकायाः प्रबन्धनायिकाया वृत्तमुपवर्ण्य तत्प्रसङ्गप्राप्तो नायकवृत्तान्तः

---

१. 'ण भा' क. पाठः. २. 'पि' क. पाठः. ३. 'ज्ञाभावस्या' ख. घ. पाठः. ४. 'त' ख. ग. घ. पाठः. ५. 'वेत्र' ङ. पाठः.

प्रस्तूयते । तत्रायं प्रसङ्गप्रकारः कैश्चिदुक्तः—ननु यदि देवगतमयाचनमद्रिपतेस्तस्य कन्याग्राहणाशक्त[1]त्वस्य हेतुस्तर्हि केन हेतुनायं देवः स्वयमेव हिमवन्तं निजपूर्वपत्नीं न याचितवानित्यत्राह—यदैवेतीति । वयं तु देवीशरीरत्यागानन्तरं देवः किमकरोदित्यत्राहेति ब्रूमः ।

सुदती सा पूर्वे जनने दक्षरोषाद् यदैव शरीरं ससर्ज पशूनां पतिस्तदाप्रभृत्येवापरिग्रहः अभूत् । शोभना दन्ता यस्याः सा सुदती । 'वयसि दन्तस्य दतृ' (५.४.१४१) इति दत्रादेशः । 'उगितश्च' (४.१.६) इति ङीप्। शोभनदशना युवतिश्चेत्यर्थः । अनया च वयोवस्थया देवस्य देवीसम्भोगेष्वतृप्तत्वं लक्ष्यते । देवतानां वयोवस्थाया अविशेषात् । अर्धभुक्तमिष्टं विनष्टं हि वस्तु सत्त्ववतां सर्वतो निर्वेदमापादयति । अत एव विमुक्तसङ्ग इत्युक्तम् । दक्षरोषात् तु सतीति पाठे तुशब्दः प्रकरणान्तरोपक्रमद्योतकः । सतीति नाम । सा पार्वती पूर्वे जनने पूर्वस्मिन् जन्मनि, दक्षपुत्रीत्वावस्थायामित्यर्थः । दक्षरोषाद् दक्षविषयाद् रोषाद् यदैव शरीरं ससर्ज विससर्ज, पशूनां कर्मपाशयन्त्रितानां ब्रह्मादिस्तम्बपर्यन्तानां जीवानां पतिः अन्तर्यामितया नियन्ता । अनेन सङ्गत्यागादीनामप्यस्य लोकयात्रामूलत्वं व्यज्यते। तदाप्रभृत्येव तदानीमेवारभ्य अपरिग्रहो ममत्वरहितोऽभूत् । यदैव देवी दक्षरोषादात्मनः शरीरं विससर्ज, तदानीमेव परमेश्वरोऽहम्ममाभिमानरहितोऽभूदित्यर्थः । किमत्र चित्रम् । पितापि विप्रियमाचरन् पुत्र्याः शरीरत्यागे हेतुर्जात इति द्योतयितुं प्रकरणसिद्धमपि दक्षरोषमुपात्तवान् । देवी तु—

"यावतः कुरुते जन्तुः सम्बन्धान् मनसः प्रियान् ।
तावन्तोऽस्य निखन्यन्ते हृदये शोकशङ्कवः ॥"

इति न्यायमवलम्ब्य स्वशरीरमेव तत्याजेत्यर्थः । अपरिग्रहत्वावलम्बे हेतुमाह—

---

१. 'क्ति' घ. पाठः. २. 'स्थ' घ. पाठः. ३. 'रं त' ख. पाठः.

विमुक्तसङ्ग इति । विमुक्तो विशेषेण मुक्तः सङ्गः सक्तिर्येन स तथा । सङ्गो हि ममत्वाभिमाने हेतुः । ननु कुतो भगवतो ममत्वं, कुतस्तरां तत्परित्यागः । सत्यम् । इष्टजनवियोगे महाजनैरेवमेव कर्तव्यं, न पुनरतिमोह इति लोकशिक्षार्थमेव देवस्यायं व्यापारः । ननु यदि देवीशरीरत्याग एव देवस्य ममत्वपरित्यागे हेतुस्तर्हि किमर्थं तदाप्रभृत्येवेति कालनिर्णयस्योपादानम् । देवीशरीरत्यागाद् देवो ममत्वरहितोऽभूदित्येव हि वक्तव्यम् । उच्यते । काल एव हि सर्वेषामपि भावानां प्रवृत्तिनिवृत्तिहेतुः, 'मधौ माद्यन्ति कोकिला' इत्यादिव्यवहारदर्शनात् । तस्माद् देवीशरीरत्यागविशिष्टस्य कालस्यैव सङ्गत्यागकारणत्वमिति न काचिदनुपपत्तिः ॥ ५२ ॥

**स कृत्तिवासास्तपसे यतात्मा**
**गङ्गाप्रपातोत्थितदेवदारु ।**
**प्रस्थं हिमाद्रेर्मृगनाभिगन्धि**
**किञ्चित् क्वणत्किन्नरमध्युवास ॥ ५३ ॥**

(प्रकाशिका)

ततः किमित्याह—

**स** इति । यतात्मा हिंसादिभ्यो निवृत्तचित्तः । प्रपतन्त्यस्मिन्निति प्रपातः । मृगनाभिः कस्तूरी । क्वणत्किन्नरं किञ्चित् प्रस्थमिति विशेषानादरं द्योतयति । परमेश्वरपरिगृहीतस्यैव क्षेत्रत्वात् । अत्राद्येन विशेषणत्रयेण तपसः परिकर उक्तः । अन्त्येन विशेषणद्वयेन रमणीयत्वप्रतिपादकेन विरोधिसन्निधावप्यतिधीरत्वाद् देवस्य धैर्यलोपशङ्का नास्तीति द्योत्यते । यथा शाकुन्तले—

"प्राणानामनिलेन वृत्तिरुचिता सत्कल्पवृक्षे वने
तोये काञ्चनपद्मरेणुकपिशे धर्माभिषेकक्रिया ।

१. 'बाह्योक्षित' मुद्रितकोशपाठः. २. 'षेणाद' घ. पाठः

ध्यानं रत्नशिलातलेषु विबुधस्त्रीसन्निधौ संयमो
यत् काङ्क्षन्ति तपोभिरन्यमुनयस्तस्मिंस्तपस्यन्त्यमी ॥"

इति ॥ ५३ ॥

( विवरणम् )

निस्सङ्गस्य भगवतः प्रवृत्तिं दर्शयति—

स इति । स कृत्तिवासास्तपसे हिमाद्रेः किञ्चित् प्रस्थमध्युवास । सः य एवं निर्विण्णः स इत्यर्थः । कृत्तिवासाः कृत्तिरर्थाद् गजचर्म वासो यस्य स तथा । अनेन तपःपरिकरभूतमजिनधारणमुक्तम् । तपसे तपश्चरितुं हिमाद्रेर्हिमाचलस्य किञ्चिद् यत्किञ्चित् । अनेन प्रस्थविशेषणेन देवस्य प्रस्थविशेषानादर उक्तः, परमेश्वरपरिगृहीतस्यैव पुण्यफलत्वात् । प्रस्थं सानुम् । 'प्रस्थः सानुरस्त्रियाम्' इत्यमरः । 'पुंनपुंसकयोः प्रस्थम्' इति शाश्वतः । अध्युवासाध्यास्त । 'उपान्वध्याङ्वसः' (१.४.४८) इति प्रस्थस्य कर्मसंज्ञा । तपसः परमोपकरणमाह—यतात्मा । यतः संयत आत्मा मनो येन । एतच्च बहिरिन्द्रियाणामप्युपलक्षणम्, अन्येन्द्रियप्रवृत्तिपूर्वकत्वात् । जितेन्द्रिय इत्यर्थः । तपसो बाह्योपकरणसम्पत्तिं दर्शयितुं प्रस्थं विशिनष्टि—गङ्गाप्रपातोत्थितदेवदारु । गङ्गायाः प्रपातो गङ्गाप्रपातः । प्रपतत्यस्मिन्निति व्युत्पत्त्या प्रपातः प्रपतनस्थानम् । गङ्गायाः प्रपतनस्थानमित्यर्थः । तत्रोत्थिताः प्ररूढाः देवदारवो वृक्षविशेषा यस्मिंस्तत् । अनेन प्रस्थस्य पावनत्वं, जलबाहुल्यं, छायासौख्यं चोक्तम् । प्रस्थस्य रमणीयत्वमाह—मृगनाभीत्यादिना विशेषणद्वयेन । मृगनाभिः कस्तूरी, तस्य गन्धोऽस्त्यस्मिन्निति तथा । क्वणन्तो वीणया सह गायन्तः किन्नरा यस्मिंस्तत् तथा । अनेन विशेषणद्वयेन देवस्यातिधीरत्वाद् रमणीयवस्तुसन्निधावपि समाधिभङ्गशङ्का नाभूदिति द्योत्यते । उक्तं च शाकुन्तले—

"प्राणानामनिलेन वृत्तिरुचिता सत्कल्पवृक्षे वने
तोये काञ्चनपद्मरेणुकपिशे धर्माभिषेकक्रिया[1] ।
ध्यानं रत्नशिलातलेषु विबुधस्त्रीसन्निधौ संयमो
यत् काङ्क्षन्ति तपोभिरन्यमुनयस्तस्मिंस्तपस्यन्त्यमी ॥"

इति । तेन च कथानायकस्य स्वेच्छापरिगृहीतधीरोदात्तावस्था ध्वन्यते ।

"महासत्त्वोऽतिगम्भीरः क्षमावानविकत्थनः ।
स्थिरो निगूढाहङ्कारो धीरोदात्तो दृढव्रतः ॥"

इति धीरोदात्तलक्षणमिति । अत्र काव्ये तावदाधिकारिकतया वर्ण्यमाने तारकासुरनिग्रहाय कुमारोत्पादनरूपे भगवच्चरिते दयावीरो रसोऽङ्गी । इतरेषां तु शृङ्गारादीनां तदङ्गता । नन्वत्र तृतीयसर्गान्तं यावत् तपश्चर्यानुभावभासुरः शान्तो रसोऽङ्गतया वर्ण्यते । स च पूर्ववृत्तत्वेनोपक्षिप्तस्य शृङ्गारस्य विरोधीति कथं तयोः समावेशः । उच्यते । तद्विरोधनिवृत्त्यर्थमेव हि महाकविना तन्मध्ये तदुभयाविरोधी देवीदेहत्यागसूचितः करुणो रस उपक्षिप्त इति नात्र कश्चिद् विरोधः । तदुक्तं ध्वनिकारेण—

"रसान्तरान्तरितयोरेकवाक्यस्थयोरपि ।
निवर्तते हि रसयोः समावेशविरोधिता ॥"

इति ॥ ५३ ॥

**गणा नमेरुप्रसवावतंसा**
**भूर्जत्वचः स्पर्शवतीर्वसानाः[2] ।**
**मनःशिलाविच्छुरिता निषेदुः**
**शैलेयगन्धेषु[3] शिलातलेषु ॥ ५४ ॥**

---

१. 'पुण्याभि' ग. घ. पाठः. २. 'दधानाः' मुद्रितकोशपाठः. ३. 'नद्धेषु' मुद्रितकोशपाठः.

(प्रकाशिका)

गणा इति । नमेरुः सुरपुन्नागः । मनःशिलया विच्छुरितास्तदङ्गरागाः । शैलेयं गन्धौषधिविशेषः शिलाजतु वा । अत्र परमेश्वरोपासकानां मायागर्भनिष्क्रान्तानां सर्वज्ञत्वादिगुणयुक्तानामपि गणेश्वराणां लीलावलम्बितलोकवृत्तत्वात् तद्देशोचितोपभोगवर्णनमुपपद्यत एव । एवमुत्तरश्लोकेऽप्यवसेयम् ॥ ५४ ॥

(विवरणम्)

इत्थं तपश्चरणोद्युक्ते परमेश्वरे तदुपासनापरिहृतमायातत्कार्याणां भूतगणानां तद्देशकालोचितमुपभोगं वर्णयति—

गणा इति । गणाः शैलेयगन्धेषु शिलातलेषु निषेदुः । गणाः परमेश्वरपार्षदा भूतगणाः । शैलेयगन्धेषु, शैलेयाः गन्धौषधिविशेषाः शिलाजतु वा । 'शिलाजतु तु शैलेयम्' इति वैजयन्ती । शैलेयानां गन्धो येषु तेषु शिलातलेषु शिलाप्रदेशेषु । अनेनावस्थानसौख्यमुक्तम् । निषेदुः स्थितिं चक्रुः । तेषां तद्देशकालोचितं भूषणादिकं वर्णयति विशेषणत्रयेण । तत्रादौ शिरोलङ्कारमाह—नमेरुप्रसवावतंसा इति । नमेरूणां सुरपुन्नागानां प्रसवाः पुष्पाण्यवतंसाः शिरोलङ्कारा येषां ते तथा । अनेन नमेरुकुसुमानामतिरक्तत्वादलङ्कारसौख्यमुक्तम् । वसनसौख्यमाह—स्पर्शवतीर्भूर्जत्वचो वसाना इति । स्पर्शवतीर्विशिष्टतरस्पर्शगुणयुक्ताः, अतिमृद्वीरित्यर्थः । अनेन परिधानसौख्यमुक्तम् । भूर्जत्वचस्तद्देशसुलभान् वृक्षत्वग्विशेषान् । वसानाः परिदधानाः । अङ्गरागसौख्यमाह—मनश्शिलाविच्छुरिता इति । मनश्शिला धातुविशेषः, तया विच्छुरिता रूषिताः, तदङ्गरागा इत्यर्थः । अनेन तेषां रक्ततरत्वादितराङ्गरागेभ्यो मनोहारित्वमुक्तम् । भूतगणास्तद्देशसुलभैरुपभोगसाधनैर्भगवत्सन्निधावेव रेमिर इति भावः ॥५४॥

---

१. 'ण्येवाव' क. ख. ग. पाठः.

तुषारसङ्घातशिलाः खुराग्रैः
समुल्लिखन् दर्पकलः ककुद्मान् ।
दृष्टः कथञ्चिद् गवयैर्विविग्नै-
रसोढसिंहध्वनिरुन्ननाद ॥ ५५ ॥

(प्रकाशिका)

तुषारेति। तुषारसङ्घातश्चासौ शिला चेति विग्रहः। दर्पकलः दर्पेण कलः सुन्दरः । विविग्नैर्भीतैः । गवयाः गोसदृशाकृतयो मृगाः । नित्यदृप्तत्वात् तद्देशसम्भविनं धीरधीरं सकलसत्त्वभीषणं सिंहध्वानमसहमानस्तत एव खुरविलिखिततुहिनशिलः कैलासकूटप्रख्यवपुष्मत्तया प्रलयमेघगर्जितप्रतिमध्वानतया च चकितैः सजातीयशङ्कया गवयैर्विलोक्यमानो देवस्यौपवाह्यो वृषो जगर्जेत्यर्थः ॥ ५५ ॥

(विवरणम्)

भगवद्वाहनभूतस्य ककुद्मतः प्रवृत्तिं वर्णयति—

तुषारेति । ककुद्मानुन्ननाद । ककुद्मान् हरवृषभः उन्ननाद उच्चैर्ननाद । वृषभस्वभावमाह—तुषारसङ्घातशिलाः खुराग्रैः समुल्लिखन्निति । तुषाराणां तुहिनानां सङ्घाताः समूहाः तुषारसङ्घाताः, तुषारसङ्घाताश्च ताः शिलाश्चेति तुषारसङ्घातशिलाः, ताः खुराग्रैः समुल्लिखन् खुराणामग्रैः कर्षन् । खुराणामग्रैस्तद्देशसुलभान् हिमजालोपलाननवरतमुल्लिखन्नित्यर्थः । अयं च कुपितानां मत्तानां वृषभाणां स्वभावः । तत्र मत्तत्वमाह—दर्पकल इति । दर्पेण परिभूतसकलमृगतया जनितेनाहङ्कारेण कलः सुन्दरः । अत एव विविग्नैर्गवयैः कथञ्चिद् दृष्टः । विविग्नैर्भीतैश्चलितैश्च । 'ओविजी भयचलनयोः' इत्यस्माद् धातोर्निष्ठान्तोऽयं शब्दः । गवयैर्गोसदृशाकृतिभिर्मृगविशेषैः । कथञ्चित् कथमपि दृष्टो विलोकितः । कैलासप्रतिमाङ्गतया प्रलयघनघटा-

१. 'मानध्वा' घ. पाठः. २. 'भयचकि' ग. घ. पाठः. ३. 'ज' क. ख. पाठः.

गर्जितसदृक्षनिस्वानतया च जायमानात् त्रासात् स्वयूथ्यशङ्काजनितेन विश्वासलवेन च यथाकथञ्चिदवलोक्यमान इत्यर्थः। कुपितत्वमाह — असोढसिंहध्वनिरिति। सोढो मर्षितो न भवतीत्यसोढः, असोढः सिंहानां ध्वनिर्येन स तथा। तद्देशसुलभं सकलजनभयानकं सिंहध्वनिमप्यसहमान इत्यर्थः। अत्र स्वभावोक्तिरलङ्कारः। 'स्वभावोक्तिस्तु डिम्भादेः स्वक्रियारूपवर्णनम्' इति ॥ ५५ ॥

तत्राग्निमाधाय समित्समिद्धं
स्वमेव मूर्त्यन्तरमष्टमूर्तिः।
स्वयं विधाता तपसः फलानां
केनापि कामेन तपश्चचार ॥ ५६ ॥

(प्रकाशिका)

तत्रेति। अग्नेः सकलवैदिकानुष्ठाने प्राधान्येन तदाधानस्य पौर्वकाल्यम्। अग्निश्चायं तपोर्थः न गार्हपत्यादिः, अपत्नीकत्वात्। समित्समिद्धमिति तत्परिचर्यायामविकलत्वं द्योत्यते। स्वमेव मूर्त्यन्तरमिति तत्स्वरूपविशेषाभिज्ञत्वम्। तपसः फलानां स्वयं विधातेति परमपरिपूर्णत्वेन स्वतन्त्रत्वेन च स्वर्गादिप्रसिद्धफलापेक्षाविरहं द्योतयता विशेषणेन केनापीति निर्दिष्टं कामस्याचिन्तनीयत्वमुपपादितम्। तपसः कामनापूर्वकत्वाद् निष्कामानामपि वा तपस्यतामन्तःकरणशुद्धेः कर्मपरिक्षयस्य वा समभिहितत्वात् फलभावानुमितिः।[1] फलस्य चोक्तप्रकारेणाचिन्तनीयत्वम्। अभिसन्धिविशेषश्च[2] फलं कामः। तस्मात् केनापि कामेनेत्युक्तम्। अतिशयार्थं चाचिन्तनीयत्वं कामस्योक्तम्। वस्तुतस्तु लोकानुग्रहाय कारुणिकस्य तस्य तप इति पुराणादिप्रसिद्धम् ॥ ५६ ॥

---

१. 'णानुमितिचि' घ. पाठः. २. 'षयश्च' ङ. पाठः.

(विवरणम्)

इत्थं भगवत्पार्षदानां प्रवृत्तिं प्रतिपाद्य प्रकृतस्य भगवतस्तप एव प्रस्तौति--

तत्रेति । अष्टमूर्तिस्तत्राग्निमाधाय केनापि कामेन तपश्चचार । सूर्यानलादिभेदेनाष्टौ मूर्तयः शरीराणि यस्य सोऽष्टमूर्तिः शिवः । यथोक्तं—

"सूर्यानलेन्द्वात्मधरानिलाम्बुव्योमाह्वया यस्य हि मूर्तयोऽष्टौ ।
तं लोकनाथं कथयन्ति सन्तः शैलेन्द्रकन्यापतिमष्टमूर्तिम् ॥"

इति । अनेन भगवतस्त्रैलोक्यात्मकत्वमुक्तम् । तत्र हिमवच्छिखरे अग्निमाधाय विलेखनप्रोक्षणादिना सम्पाद्य । नात्र गार्हपत्यादीनामग्नीनां श्रौतेनाधानविधिना सम्पादनं विवक्षितं, तत्र सपत्नीकस्यैवाधिकारात् । सकलवैदिककर्मानुष्ठानेष्वग्नेरेव प्राधान्यात् तदाधानस्य पूर्वकालत्वम् । केनापि कामेन निपुणं निरूपयतामप्यवाङ्मनसगोचरेण केनाप्यभिसन्धिविशेषेण । हेतौ तृतीया । तपश्चचार तपः कृतवान् । अग्नौ विहितानि कर्माण्यपि संक्षिप्य दर्शयति—समित्समिद्धमिति । समिद्भिः समिद्धं सम्यगिद्धम् । अनिद्धेऽग्नौ होमनिषेधादिद्धमित्युक्तम् । पुनश्च समिद्धोमानन्तरं ताभिः सम्यगिद्धमिति भावः । देवेनाराध्यस्य देवतान्तरस्याप्यभावं द्योतयन्नग्निं विशिनष्टि—स्वमेव मूर्त्यन्तरमिति । स्वमात्मीयमेव मूर्त्यन्तरं मूर्तिभेदम् । अष्टमूर्तेर्भगवत एका हि मूर्तिरग्निरेव । भगवतस्तपःफलेष्वनादरं द्योतयन् भगवन्तं विशिनष्टि—स्वयं तपसः फलानां विधातेति । अत्र स्वयमित्यनेन फलप्रदाने स्वातन्त्र्यमुक्तम् । तपःफलत्वेन प्रसिद्धानां स्वर्गादीनां स्वयमेव प्रदातेत्यर्थः । अनेन देवस्य तपश्चरणे फलप्रदात्रन्तराभाव उक्तः । अखिलकर्मिणां कर्मफलप्रदस्य भगवतस्तपश्चरणे तदाराधनीयस्य देवतान्तरस्याभावात् फलप्रदात्रन्तराभावात् प्रदेयस्य स्वर्गादेः स्वानुवर्तित्वेन भगवतस्तत्र साध्यत्वाभावाच्च कथं देवकृतस्य तपसः फलविशेषानुमानोपपत्तिरिति केनापि कामेने-

१. 'तं भ' क. ख. ग. पाठः. २. 'न्यपि क' क. ख. ग. पाठः. ३. 'णि सं' क. ख. पाठः. ४. 'धात् समिद्धमि' क. ख. ग. पाठः. ५. 'स्याप्यभा' घ. पाठः. ६. 'स्वोत्पत्तित्वे' घ. पाठः.

त्युक्तम् । नन्वकामनया तपश्चरणमस्तु । मैवम् । अकामनया तपश्चरतामपि दुरितक्षयादिभिरन्तःकरणशुद्धिद्वारेण मोक्षफलार्थित्वात् । नित्यमुक्तस्य भगवतश्च तदभावात् । तस्मात् तपश्चरणदर्शनेन फलसामान्याभिलाषानुमानोदये सत्यपि तद्विशेषानुमानस्य दुष्करत्वादुपपन्नमेव केनापि कामेनेति वचनम् । कामस्याचिन्तनीयत्वप्रतिपादनमतिशयार्थमेव । परमार्थतस्तु भगवतस्तपश्चरणं लोकानुग्रहणाय । अनुग्रहश्च सर्वैरप्येवं कर्तव्यमित्युपदेशः । यथोक्तं भागवते—

"ईजे च भगवान् रामो यत्रास्पृष्टोऽपि कर्मणा ।
लोकानां ग्राहयञ्छीलं यथान्योऽघापनुत्तये ॥"

इति ॥ ५६ ॥

**अनर्घमर्घ्येण**[1] **तमद्रिनाथः**
**स्वर्गौकसामर्चितमर्चयित्वा ।**
**आराधनायास्य सखीसमेग्रां**[2]
**समादिदेश प्रयतां तनूजाम् ॥ ५७ ॥**

(प्रकाशिका)

अथ वक्ष्यमाणाधिकारिकवृत्तभागसङ्घटनाय[3] स्वावसरे पताकादिवृत्तं किञ्चिदनुसन्धत्ते—

**अनर्घमिति** । अर्घः पूजा, तद्रहितोऽनर्घः । दवीयस्तया तदगोचरमित्यर्थः । स्वर्गौकसामर्चितं देवैरर्च्यमानम् । 'मतिबुद्धि—' (३.२.१८८) इत्यादिना वर्तमाने क्तः । 'क्तस्य च वर्तमाने' (२.३.६७) इति षष्ठी । प्रयतां शुद्धाम् । तनूजामिति गृहमेधिनो ह्यतिथीनां सत्काराय

१. 'र्घ्ये' मुद्रितकोशपाठः. २. 'मेतां' मुद्रितकोशपाठः ३. 'गघट' घ. ङ. पाठः. ४. 'कान्न्' क. ख. ग. घ. पाठः.

कन्यका नियुञ्जन्ति । यथा दुर्वाससः कुन्तीं कुन्तिभोजः । यथा वा बलभद्रः सुभद्रां यतिवेषस्य किरीटिनः । अयमर्थः— यदनुग्रहविशेषलब्धतत्तदैश्वर्या ब्रह्मादयः पुनरनावृत्ति यत्पदमवाप्तुं यमेव करणग्रामागोचरं नानाद्रव्यमयेषु लिङ्गेष्वर्चयन्तीति श्रूयते, तं देवं केनापि पुण्यपरिपाकेनोपस्थितमुपलभ्य भूधरेन्द्रोऽर्घ्यादिभिरभ्यर्च्य तदविच्छेदाय श्रद्धादिगुणसमन्वितां देवीमेव तत्र नियुक्तवानिति ॥ ५७ ॥

( विवरणम् )

इत्थमुपवर्णितवृत्तयोर्नायिकानायकयोः परस्परसंघटनार्थं प्रसङ्गागतं किमपि वृत्तं प्रस्तौति—

अनर्घमिति । अद्रिनाथस्तमर्घ्येणार्चयित्वास्याराधनाय सखीसमग्रां तनूजां समादिदेश । अद्रिनाथो हिमवान् । तम इत्थं तपश्चरन्तं भगवन्तम् । अर्घ्येण, अर्घः पूजा तदर्थं जलमर्घ्यम् । एतच्च गन्धपुष्पादीनामप्युपलक्षणम् । अर्चयित्वा पूजयित्वा । जलगन्धादिक्रमेण पूजयित्वेत्यर्थः । अस्य भगवतः आराधनाय पूजायै सखीसमग्रां सखीभिः समग्रां सम्पूर्णां तनूजां समादिदेश सम्यगादिदेश नियुक्तवान् । गृहमेधिनो हि गृहागतानामतिथीनामाराधनाय कन्यकां नियुञ्जते । यथा दुर्वाससः परिचर्यार्थं कुन्तिभोजः कुन्तीमादिदेश, यथा वा यतिवेषधारिणः किरीटिनः परिचर्यार्थं सुभद्रां बलभद्रः । भगवतो माननीयत्वातिशयमाह—अनर्घमिति । अर्घः पूजाविधिः । 'मूल्ये पूजाविधावर्घः' इत्यमरः । तद्रहितोऽनर्घः, अवाङ्मनसगोचरतया पूजाविधेरगोचरमित्यर्थः । अनेन विशेषणेन हिमवतस्तदर्चनलाभस्य सुकृतपरिपाकमात्रायत्तत्वमुक्तम् । अत एवाह—स्वर्गौकसामर्चितमिति । स्वर्ग ओको गृहमेषामिति स्वर्गौकसो देवाः, तैरर्चितं पूज्यमानम् । 'मतिबुद्धिपूजार्थेभ्यश्च'(३.२.१८८) इति वर्तमाने क्तः । 'क्तस्य च वर्तमाने'(२.३.६७) इति षष्ठी । भगवदनुग्रहमात्रलब्धब्रह्मादिलोका देवा अप्यनावृत्तिपदोपलब्धये

वचसां मनसामप्यगोचरं यमेव देवं नानाद्रव्यनिर्मितासु प्रतिमास्वेवार्चयन्तीति श्रुतिपुराणादिषु प्रतिपाद्यते, तमेव देवं साक्षादर्चयतो हिमवतः पुण्यपरिपाका मनसां वचसामप्यगोचरा एवेति भावः । तनूजायास्तदर्चननियोगे योग्यत्वमाह—प्रयतामिति । शुद्धान्तःकरणामित्यर्थः । हिमाचलमध्यासीनं भगवन्तं हिमाचलः स्वयमेवार्घ्यपाद्यादिभिरभ्यर्च्य तदविच्छेदाय परिशुद्धान्तःकरणां तनूजामेवादिदेशेत्यर्थः ॥ ५७ ॥

> प्रत्यर्थिभूतामपि तां समाधेः
> शुश्रूषमाणां गिरिशोऽनुमेने ।
> विकारहेतौ सति विक्रियन्ते
> येषां न चेतांसि त एव धीराः ॥ ५८ ॥

(प्रकाशिका)

प्रत्यर्थीति । प्रत्यर्थिभूतामिति वर्णितां रूपसंपदमनुस्मारयति । शुश्रूषमाणां परिचरन्तीम् । 'ज्ञाश्रुस्मृदृशां सनः' (१. ३. ५७) इत्यात्मनेपदम् । शुश्रूषाशब्दश्च कार्यलक्षणया परिचर्यायां रूढः । एतच्च वाक्यं वक्ष्यमाणकामदहनपर्यन्तप्रकरणावसेयस्य परमेश्वरगतस्यारूपहार्यत्वस्य बीजम् ॥ ५८ ॥

( विवरणम् )

तस्यां भगवतः प्रतिपत्तिमाह—

प्रत्यर्थीति । गिरिशस्तां शुश्रूषमाणामनुमेने । गिरिशः परमेश्वरः तां पार्वतीं । शुश्रूषमाणां परिचरन्तीम् । 'ज्ञाश्रुस्मृदृशां सनः' (१.३.५७) इत्यात्मनेपदम् । शुश्रूषाशब्दश्च श्रवणेच्छायाः कार्यं लक्षयन् परिचर्यायां रूढः । परिचरन्तीं सतीम् अनुमेने अनुज्ञातवान् । नन्वस्या लावण्यसम्पदः

---

१. 'ल्यः स्व' ख. घ. पाठः. २. 'णां वचसा तनूजां समादि' घ. पाठः. ३. 'न्तीं सतीं ।' घ. पाठः.

सकलजनचित्तक्षोभकरत्वमनवगम्यैव वा किमेवमनुज्ञातवान्, नेत्याह—समाधेः प्रत्यर्थिभूतामपीति। समाधेश्चित्तैकाग्र्यस्य प्रत्यर्थिभूतां परिपन्थिभूतामपि। सर्वेषामेतद्दर्शने चित्तैकाग्र्यं दुष्करमित्यवगच्छन्नपीत्यर्थः। एतेन विशेषणेन वर्णिता रूपसम्पदनुस्मारिता। युक्तं चैतदनुमननं देवस्येत्याह—येषां चेतांसि विकारहेतौ सति न विक्रियन्ते त एव धीरा इति। येषां जनानां चेतांसि हृदयानि विकारस्य चित्तक्षोभस्य हेतौ कारणभूते रूपादौ सत्यपि। न विक्रियन्ते विकारं न प्राप्नुवन्ति। कर्मकर्तरीदं रूपम्। त एव धीराः नान्य इत्यर्थः। अनेन वाक्येन वक्ष्यमाणकामदहनादिवृत्तान्तावगम्यस्य देवगतस्यारूपहार्यत्वस्य बीजन्यासः कृतः। अत्राप्रस्तुतस्य धीरवृत्तसामान्यस्य कथनेन प्रस्तुतं विशेषभूतं देवस्य धीरत्वं प्रतीयत इत्यप्रस्तुतप्रशंसाविशेषः। अप्रस्तुतात् सामान्यविशेषभावे कार्यकारणभावे सारूप्ये च प्रस्तुतप्रणीतावप्रस्तुतप्रशंसा॥ ५८॥

अवचितबलिपुष्पा वेदिसम्मार्गदक्षा
नियमविधिजलानां बर्हिषां चोपनेत्री।
गिरिशमुपचचार प्रत्यहं सा सुकेशी
नियमितपरिखेदा तच्छिरश्चन्द्रपादैः॥ ५९॥

(प्रकाशिका)

अथोत्तरसर्गार्थप्रस्तावाय प्रस्तुतां शुश्रूषामाह—

अवचितेति। वेदिरुपवेशनार्था। सम्मार्गः शोधनम्। नियमस्याचमनादेः विधिरनुष्ठानं, तदर्थानि जलानि। 'नियमस्तु स यत् कर्म नित्यमागन्तुसाधनमि'ति सिंहः। अवचयादीनां शुश्रूषाप्रकारत्वादियमुक्तिः। प्रत्यहमित्यतन्द्रीकत्वमुक्तम्। तच्छिरश्शब्देन चन्द्रपादानां

---

१. 'क' क. ख. ग. पाठः. २. 'गीप्र' क. ख. ग. पाठः. ३. 'जेः' ङ. पाठः.

नित्यसुलभत्वमुक्तम्। कूपखनकवद् वृत्तिरिति च ध्वन्यते, सेवया जनितः श्रमस्तयैवापनुद्यत इति। अत्र परिखेदसुकेशीशब्दाभ्यां—

"स्रस्तांसावतिमात्रलोहिततलौ बाहू घटोत्क्षेपणा-
द्यापि स्तनवेपथुं न जहति श्वासाः प्रमाणाधिकाः।
बद्धं कर्णशिरीषरोधि वदने घर्माम्भसां जालकं
बन्धे स्रंसिनि चैकहस्तयमिताः पर्याकुला मूर्धजाः॥"

इत्युक्तः श्रमावस्थासुलभः शोभाविशेषः प्रत्याय्यते। अत्र प्रकरणे कविकुलपरमेश्वरेण कामतन्त्रे कन्यासम्प्रयुक्तकाधिकरणे 'प्रयोज्यस्योपावर्तनमि'ति यत् प्रकरणं तदर्थोऽनुसंहितः। तथाहि— प्रयोज्यस्य प्रवर्तनीयस्योपावर्तनमभिमुखीकरणमिति सूत्रार्थः। तत्र प्रथमं भाष्यं— मन्दोपदेशा गुणवत्यपि कन्यका धनहीना मातापितृवियुक्ता वा ज्ञातिकुलवर्तिनी समानैरयाच्यमाना प्राप्तयौवना स्वयमेव पाणिग्रहणं लिप्सेतेति। तत्र पाणिग्रहणस्वयंलिप्सायां प्राप्तयौवनत्वे सत्यनुरूपवरायाच्यमानत्वं नियतो हेतुः। मन्दाभिज्ञ¹धनहीनपितृवियुक्तत्वानां चायाचनहेतूनां प्रायिकत्वम्। ते हि प्रायो लोके हेतवो भवन्ति। तस्मादिह परमेश्वरस्वभावो लोकविलक्षणो हेतुरयाचने। अयाचनं चोक्तम् 'अयाचितारम्'(श्लो.५१)इति। अनुरूपवरान्तराभावश्चोक्तो 'निवृत्तान्यवराभिलाषः'(श्लो.५०) इत्यनेन। न चात्र देव्यास्तद्विषया लिप्सा नोक्तेति मन्तव्यम्। 'भवपूर्वपत्नी'(श्लो.२०) इति प्रतिपादिताया नैसर्गिक्या रतेर्यौवनेना(पि ? वि)स्पष्टमुद्बोधितायाः पुनर्नारदवचसा स्पष्टोद्बोधात्। प्रौढयौवनायाः स्वयंवरश्चानुमतो धर्मशास्त्रे—

"त्रीणि वर्षाण्युदासीत कुमार्यृतुमती सती।
ऊर्ध्वं तु कालादेतस्माद् विन्देत सदृशं पतिम्॥"

---

१. 'न्दा' क. ख. ग. पाठः. २. 'पाणिग्रहणं स्वयं लि' ख. पाठः ३. 'जन' ङ. पाठः. ४. 'तिस्पष्टमु' घ. पाठः.

इति । सदृशश्च देव एवेत्युक्तम् । माता चैनां सखीभिर्धात्रेयिकाभिश्च सह तदभिमुखीं कुर्यादिति चतुर्थं भाष्यम् । तत्र सखीभिः सहेति लज्जापनयनार्थम् । मातेति गुरूपलक्षणत्वात् तद्विहितमनुष्ठानं 'सखीसमग्रां समादिदेश' (श्लो.५७) इत्युक्तम् । पञ्चमे च गत्वा गन्धपुष्पताम्बूलहस्ताया विजने काले च तदुपस्थानमित्यादिनोक्तमनुष्ठानम् 'अवचितबलिपुष्पे'त्यादिना दर्शितम् । दर्शयिष्यते च परस्ताद् 'अथोपनिन्ये गिरिशाय गौरी' (स. ३. श्लो. ६५)इत्यादिना ॥ ५९ ॥

इत्यरुणगिरिनाथविरचितायां कुमारसम्भवप्रकाशिकायां

प्रथमः सर्गः ।

---

( विवरणम् )

अथोत्तरसर्गे कथान्तरप्रस्तावाय प्रस्तुतशुश्रूषाप्रकारेणैव देव्याश्चिरावस्थानं दर्शयितुं शुश्रूषाप्रकारमेवाह—

अवचितेति । सा सुकेशी प्रत्यहं गिरिशमुपचचार । सा या गिरिशेन शुश्रूषायामनुमता सेत्यर्थः । सुकेशी शोभनाः केशा यस्याः सा तथा प्रत्यहमहरहः । अनेनातन्द्रितत्वं सावधानत्वं चोक्तम् । गिरिशं परमेश्वरम् उपचचार पर्यचरत् । परिचर्याप्रकारमाह—अवचितेत्यादिना विशेषणत्रयेण । तत्रादौ प्रातरेव कर्तव्यं पुष्पावचयमाह—अवचितबलिपुष्पेति । अवचितानि बल्यर्थानि पुष्पाणि यया सा तथा । पुनस्तदनन्तरकर्तव्यमाह—वेदिसम्मार्गदक्षेति । वेदिरवस्थानभूमिः, तस्याः सम्मार्गे शोधने दक्षा निपुणा । अथ गिरिशागमनानन्तरं कर्तव्यमाह—नियमविधिजलानां बर्हिषां चोपनेत्रीति । नियमानामाचमनादिकर्मणाम् । 'नियमस्तु स यत् कर्म नित्यमागन्तुसाधनम्'

---

१. 'त्रादि चै' ङ. पाठः. २. 'गूढत्रपाल' घ. पाठः. ३. 'व्यमर्थमा' घ. पाठः.

इत्यमरः । तेषां विधिरनुष्ठानं, तदर्थानां जलानाम् । सर्वकर्मणामाचमनपूर्वकत्वाद् जलानां पूर्वमुपादानम् । बर्हिषां परिस्तरणाद्यर्थानां च उपनेत्री समीपप्रापणं कुर्वाणा । चकारोऽनुक्तानां प्रदीपादीनामपि समुच्चयार्थः । उपचचार । खेदप्रशमनोपायोऽपि तत्रैव सुलभ इत्याह — तच्छिरश्चन्द्रपादैर्नियमितपरिखेदेति । तस्य परमेश्वरस्य शिरसि यश्चन्द्रस्तस्य पादै रश्मिभिः कर्तृभूतैः नियमिताः परिखेदाः परितः खेदाः सकलशरीरव्यापिनः खेदाः पीडा यस्याः सा तथा । अत्र तच्छिरश्शब्देन पीडाहारकाणां नित्यसुलभत्वं कूपखनकवृत्तिश्च ध्वन्यते । यथा कूपखनकस्य खननोद्भवं खेदं तदुद्भूतमेव जलमपनयति, तथास्या अपि हरसेवाजनितश्रमस्तच्छिरश्चन्द्रपादैरेवापनुद्यत इति भावः । अत्र परिखेदसुकेशशब्दाभ्यां श्रमावस्थासुलभः शोभातिशयः प्रत्याय्यते । यथोक्तं शाकुन्तले—

"स्रस्तांसावतिमात्रलोहिततलौ बाहू घटोत्क्षेपणाद्
अद्यापि स्तनवेपथुं जनयति श्वासः प्रमाणाधिकः ।
बद्धं कर्णशिरीषरोधि वदने घर्माम्भसां जालकं
बन्धे स्रंसिनि चैकहस्तयमिताः पर्याकुला मूर्धजाः ॥"

इति । एतादृशशोभाविशेषदर्शने कस्य चित्तक्षोभो न भवेदिति भावः । अत्र प्रकरणे कविप्रवरः कामशास्त्रे कन्यासम्प्रयुक्ताधिकरणे प्रतिपादितं सर्वमप्यर्थं यथावत् प्रतिपादितवान् । तत्र 'प्रयोज्यस्योपावर्तनम्' इति वात्स्यायनसूत्रम् । अस्यार्थः — प्रयोज्यस्य प्रवर्तनीयस्य स्वाभिमतस्य वरस्येत्यर्थः । उपावर्तनम् अभिमुखीकरणं, स्वानुकूलताविधानमिति यावत् । कुर्यादिति शेषः । स्वानुरूपं वरं तत्कालोचितशुश्रूषादिभिरात्मानुकूलं कुर्यादिति । न चेदं धर्मशास्त्रविरुद्धं,

"त्रीणि वर्षाण्युदासीत कुमार्यृतुमती सती ।
ऊर्ध्वं तु कालादेतस्माद् विन्देत सदृशं पतिम् ॥"

इति स्मृत्वा स्वयंवरस्यानूदितत्वात्। अनुरूपवरान्तरविरहिता स्वानुरूपेण वरेणायाच्यमाना गुणवती प्राप्तयौवना कन्या तत्राधिकारिणीति जयमङ्गलायामुक्तम्। तत्रानुरूपवरान्तराभावो 'निवृत्तान्यवराभिलाषः' (श्लो. ५०) इत्यत्रोक्तः, प्राप्तयौवनत्वं 'बाल्यात् परं साथ वयः प्रपेदे' (श्लो. ३९) इत्यत्र, गुणवतीत्वं पुनरङ्गवर्णनादौ। 'भवपूर्वपत्नी' (श्लो. २०) इत्यनेन देव्याः परमेश्वरविषयो नैसर्गिकोऽभिलाषः प्रदर्शितः। उद्बोधितश्चासावविस्पष्टं यौवनेन। नारदवाक्येन तु स्पष्टमुद्बोधित इति भगवतः प्रयोज्यत्वमपि प्रतिपादितमेव। तस्यानुकूल्यकरणोपायश्च गुरुजनानुवादपूर्वकं सखीजनैः सह तदभिमतगन्धपुष्पताम्बूलादिप्रदानं, विजने काले च तदुपस्थानमित्यपि जयमङ्गलायामुक्तम्। तदपि 'सखीसमग्रां समादिदेश' (श्लो. ५७) 'अवचितबलिपुष्पे'त्यादिना च प्रदर्शितम्। वक्ष्यति च 'अथोपनिन्ये गिरिशाय गौरी' (स. ३. श्लो. ६५) इत्यादिनेति सर्वं सुमङ्गलम्॥ ५९॥

सर्गोऽयं प्रथमो गुणैश्च गिरिजालावण्यसारं परं
यस्मिन् वर्णयति स्म कर्णमधुरैर्वर्णैः कविग्रामणीः।
तत्राहं कृशधीः करोमि किमिति व्यालोलचित्तं तु मा-
मित्थं किञ्चिदजल्पयद् गिरिसुतापादाब्जभक्तिः स्वयम्॥

गोविन्दाङ्गगुणौघवर्णनविधौ दक्षस्य नारायण-
क्ष्मादेवस्य कृतौ गिरीशगिरिजाभक्तिप्रवृद्धोदये।
व्याख्यानेऽत्र कुमारसम्भवपदार्थालोचनप्रक्रिया-
निष्णाते प्रथमः समाप्तिमगमत् सर्गो निसर्गोज्ज्वलः॥

इति श्रीकृष्णप्रियशिष्यस्य नारायणस्य कृतौ

कुमारसम्भवविवरणे

प्रथमः सर्गः।

## अथ द्वितीयः सर्गः ।

तस्मिन् विप्रकृताः काले तारकेण दिवौकसः ।
तुरासाहं पुरोधाय धाम स्वायम्भुवं ययुः ॥ १ ॥

(प्रकाशिका)

अथैतत्प्रकरणोपयोगितया प्रकरणान्तरमारभते—

तस्मिन्निति । तस्मिन् काले उपावर्तनकाले । इदमप्यपरमासीदित्यर्थः । तुरासाट्छब्दस्य 'छन्दसि सहः' (३.२.६३) इति ण्विप्रत्ययविधानाच्छन्दस्येव साधुत्वम् । भाषायामपि साधुत्वं गिरिशादिवत् । तदाश्रयणपक्षे तु तुरासाहमिति पाठः । यद्वा भाषायामपि साधुत्वम् । यथा क्षीरतरङ्गिण्यां— तुरं त्वरितं साहयत्यभिभवत्यरीन् । 'षह मर्षणे' इति चौरादिकोऽयं धातुः । ततो णिजन्तात् क्विप् । पूर्वपदस्य 'न हि वृति—'(६.३.११६) इत्यादिना दीर्घः । 'सहेः साडः सः'(८. ३. ५६) इति साड्भूतस्य सहेः षत्वविधानाद् द्वितीयायां षत्वं नास्ति । पुरोधाय पुरस्कृत्य । धाम सदनम् । स्वायंभुवं 'ओर्गुणः' (६.४.१४६) इति गुणग्रहणाद् गुणज्ञापितस्यानित्यत्वाद् गुणाभावः ॥ १ ॥

(विवरणम्)

अथोपवर्णितप्रकरणानुगुणं प्रकरणान्तरमारभते—

तस्मिन्निति । दिवौकसः तस्मिन् काले तारकेण विप्रकृताः तुरासाहं पुरोधाय स्वायम्भुवं धाम ययुः । दिवौकसो देवाः तस्मिन् काले देव्याः प्रयोज्योपावर्तनकाले तारकेण तारकाख्येनासुरेण विप्रकृताः पीडिताः सन्तः ।

---

१. 'क्ष तुरा' क. ख. ग. पाठः. २. 'ख्यास' क. पाठः.

तुरासाहम् इन्द्रम् । तुराषाट्छब्दस्य 'छन्दसि सहः' (३. २. ६३) इति ण्विप्रत्ययविधानात् कथं भाषायां साधुत्वम् । उच्यते । तुरं त्वरितं साहयत्यभिभवत्यरीनिति तुराषाट् । 'षह मर्षण' इति चौरादिको धातुः । ततो णिजन्तात् क्विप् । 'नहिवृति—' (६. ३. ११६) इत्यादिना पूर्वपददीर्घः । 'सहेः साडः सः' (८. ३. ५६) इति साड्भूतस्यैव सहेः षत्वविधानाद् द्वितीयायां तदभावेन षत्वाभावः । पुरोधाय पुरस्कृत्य स्वयम्भुव इदम् । 'ओर्गुणः' (६. ४. १४६) इति गुणग्रहणाद् गुणज्ञापितस्य 'संज्ञापूर्वको विधिरनित्य' इति अनित्यत्वादत्र गुणाभावः । धाम सदनम् । 'धाम तेजस्सदनयोरि'ति भोजः । ययुः जग्मुः । देव्याः[1] परमेश्वरपरिचर्यासमये शतमखमुखा[2] मखभुजस्तारकासुरपरिभवमसहमानास्तन्निवेदनाय परमेष्ठिनः सद्म प्रपेदिर इत्यर्थः ॥ १ ॥

**तेषामाविरभूद् ब्रह्मा परिम्लानमुखश्रियाम् ।**
**सरसां सुप्तपद्मानां प्रातर्दीधितिमानिव ॥ २ ॥**

(प्रकाशिका)

तेषामिति । आविरभूत् प्रकाशोऽभूत् । 'प्रकाशे[3] प्रादुराविः स्यादि[4]'त्यमरः । अनेन स्वयमनुग्रहोन्मुख आत्मानं दर्शितवान्, न तु ते स्वप्रयत्नेन ददृशुरिति द्योत्यते । अत एव तादृगुपमानं दत्तम् । उपमानेन च स्वापस्येव परिम्लानमुखश्रीत्वस्य तदीयाविर्भावावधिकत्वं द्योत्यते । प्रातरिति नियतनिमित्तभूतकालवाचिना ब्रह्मणोऽपि लोकानुग्रहार्थं भाविनि सभायामाविर्भावे निमित्तत्वेन नियतस्वेच्छापरिकल्पितः कालः प्रकाश्यते, यत्र तेषां तदुपस्थानमासीत् ॥ २ ॥

(विवरणम्)

तेषां तद्दर्शनप्रकारमाह—

तेषामिति । ब्रह्मा तेषाम् आविरभूत् । तेषां दिवौकसाम् । सम्ब-

---

१. 'व्या ईश्व' ग. पाठः. २. 'खप्रमु' घ. पाठः. ३ 'शः' क. पाठः. ४. 'दिति सिंहः । अ' ख. घ. पाठः.

न्धषष्ठी चेयम् । आविरभूत् प्रकाशोऽभूत् । 'प्रकाशे प्रादुराविः स्यादि'त्यमरः । तेषां तारकासुरपीडाया अनुभावमाह — परिम्लानमुखश्रियामिति । परिम्लाना परितः समन्ताद् म्लाना म्लानिमुपगता मुखश्रीः मुखशोभा येषाम् । कल्पान्तकृशानुकल्पेन तारकासुरभुजबलोष्मणा परिम्लानमुखानां बहिर्मुखानां दयानिधिः परमेष्ठी स्वयमेवात्मानं दर्शितवान्, न तु तैः प्रयत्नेनान्विष्य दृष्टोऽभूदिति भावः । अनेन ब्रह्मणोऽपि देवकार्यानुगुणत्वं व्यज्यते । अत एव तदनुगुणमुपमानमाह—सुप्तपद्मानां सरसां प्रातः दीधितिमान् इव इति । सुप्तपद्मानां सुप्तानि मुकुलितानि पद्मानि येषां तेषां सरसां पद्माकराणां प्रातः प्रभाते । उपमेयपक्षे तद्दर्शनानुगुणकाल इत्यर्थात् सिध्यति । दीधितिमान् आदित्य इव । अत्र परिम्लानमुखश्रियामिति सुप्तपद्मानामिति विशेषणद्वयं परस्परबिम्बप्रतिबिम्बभावेन स्थितम् । उपमया तेषां मुखवैवर्ण्यस्य ब्रह्मदर्शनावधिकत्वं ध्वनितम् ॥ २ ॥

अथ सर्वस्य धातारं ते सर्वे सर्वतोमुखम् ।
वागीशं वाग्भिरर्थ्याभिः प्रणिपत्योपतस्थिरे ॥ ३ ॥

(प्रकाशिका)

अथेति । सर्वस्य धातारमिति प्रणिपातोपस्थानौचित्यम् । सर्वे, न त्वतिभूयस्त्वादलब्धसाम्मुख्येन केचन । कुत इत्याह— सर्वतोमुखमिति । अनेन समन्ताद् युगपच्चोपस्थानं प्रतीयते । तत एव वक्ष्यति— चतुर्मुखसमीरिता चतुष्टयी शब्दानां प्रवृत्तिरिति । अर्थ्याभिरर्थादनपेताभिः, सत्याभिरित्यर्थः । यतोऽयं वागीशः, ततोऽस्योपस्थाने तथाविधानां वाचां प्रसर उपपन्न एवेति भावः । उपतस्थिरे पूजयामासुः । उपाद् देवपूजासंगति—'(वा०. १. ३. २५) इत्यादिनात्मनेपदम् ॥ ३ ॥

१. 'भ' ख. ग. घ. पाठः.

( विवरणम् )

तेषां तदुपस्थानप्रकारमाह—

अथेति । अथ ते सर्वे वागीशं प्रणिपत्य अर्थ्याभिः वाग्भिः उपतस्थिरे । अथ आविर्भावानन्तरं ते दिवौकसः सर्वे, न तु जनबाहुल्यादलब्धसम्मुखत्वेन केचिदेवेत्यर्थः । वागीशं वाचः सरस्वत्या ईशं भर्तारम् । अत एव तदुपस्थाने तथाविधानां वाचां प्रसर इति भावः । प्रणिपत्य प्रणम्य अर्थ्याभिः अर्थादनपेताभिः । 'धर्मपथ्यर्थन्यायादनपेते' (४.४.९२) इति यत्प्रत्ययः । यथार्थभूताभिर्वाग्भिः उपतस्थिरे पूजयामासुः । 'उपाद् देवपूजासङ्गतिकरणमित्रकरणपथिष्विति वक्तव्यम्'(वा.१.३.२५)इत्यात्मनेपदम्। तस्य प्रणिपातोपस्थानयोग्यत्वमाह—सर्वस्य धातारमिति । सर्वस्य कृत्स्नस्य जगतः धातारं स्रष्टारम्, अखिलजगन्निर्माणकर्तारमित्यर्थः । ननु कथमेकस्यैव सर्वेषां युगपदाभिमुख्येन प्रणिपातादिसम्भवः, अत आह— सर्वतोमुखमिति । सर्वतः सर्वासु दिक्षु मुखानि यस्य तं, चतुर्मुखमित्यर्थः । तस्य चतुर्मुखत्वात् समन्ताद् युगपच्चोपतस्थिर इति भावः । अत एव वक्ष्यति—

"पुराणस्य कवेस्तस्य चतुर्मुखसमीरिता ।
प्रवृत्तिरासीच्छब्दानां चरितार्था चतुष्टयी ॥"(श्लो. १६)

इति ॥ ३ ॥

**नमोऽस्त्वमूर्तये तुभ्यं प्राक् सृष्टेः केवलात्मने ।**
**गुणत्रयविभागाय पश्चाद् भेदमुपेयुषे ॥ ४ ॥**

(प्रकाशिका)

**नमोऽस्त्विति** । अमूर्तये अशरीराय । केवलात्मने एकात्मने । 'निर्णिक्ते[2] केवलमिति त्रिलिङ्गं त्वेककृत्स्नयोरि'ति सिंहः । गुणत्रयेण

१. 'मेठसि' घ. पाठः. २. 'र्णीते के' इति मुद्रितामरकोशपाठः.

विभागो यस्य। भेदमुपेयुषे त्रिमूर्तित्वेनेति शेषः। अयमर्थः— सृष्टेः प्रागेकात्मनेऽमूर्तये[1] पश्चात् सत्त्वादिगुणमधिष्ठाय ब्रह्मविष्णुरुद्रात्मने तुभ्यं नमोऽस्त्विति ॥ ४ ॥

(विवरणम्)

अथ तेषां वाचिकमुपस्थानं प्रपञ्चयति नमोऽस्त्वित्यादिभिरेकादशभिः श्लोकैः। तत्रादौ ब्रह्मणस्त्रिमूर्तिसृष्टौ हेतुत्वमाहुः—

नम इति। तुभ्यं नमः अस्तु। तुभ्यं 'नमस्स्वस्ति—'(२.३.१६)इत्यादिना नमश्शब्दयोगे चतुर्थी। नम इति नमस्कारवाचकमव्ययम्। अस्तु भवतु। अस्माभिः कृतो नमस्कार एतादृशाय भवते भवत्वित्यर्थः। कीदृशायेत्याकाङ्क्षायां ब्रह्मणो मूर्तित्रयसृष्टेः पूर्वावस्थामाहुः—सृष्टेः प्राक् केवलात्मने अमूर्तये इति। सृष्टेः प्राक् त्रिमूर्तिसृष्टेः पूर्वावस्थायां केवलात्मने एकात्मने। 'निर्णीते केवलमिति त्रिलिङ्गं त्वेककृत्स्नयोरि'त्यमरः। अद्वितीयायेत्यर्थः। अत एवामूर्तये अशरीराय। सृष्ट्यनन्तरं तु भवानेक एव त्रिधा भासत इत्याहुः— पश्चाद् भेदम् उपेयुषे इति। पश्चात् सृष्टेरूर्ध्वकालं भेदं ब्रह्मविष्णुशिवात्मना त्रैविध्यव्यवहारम् उपेयुषे प्राप्तवते। त्रैविध्यप्राप्तौ हेतुमाहुः—गुणत्रयविभागायेति। गुणानां सत्त्वरजस्तमसां त्रयं गुणत्रयं, तेन विभागः पृथग्भावो यस्य तस्मै। तदुक्तं—

"पालने विमलसत्त्ववृत्तये जन्मकर्मणि रजोजुषे लये।
तामसाय जगतां पराकृतद्वैतजालवपुषे नमोऽस्तु ते ॥"

इति ॥ ४ ॥

**यदमोघमपामन्तरुप्तं बीजमज! त्वया।**
**अतश्चराचरं विश्वं प्रभावस्तस्य गीयते ॥ ५ ॥**

---

१. 'ये च प' क. पाठः. २. 'ह' घ. पाठः.

(प्रकाशिका)

यदिति। 'अदश्चराचरं विश्वं प्रभावस्तस्य गीयत' इति पाठः। प्रकृष्टो भावः प्रभावो विभूतिः। 'श्रिणीभुवोऽनुपसर्गे' (३. ३. २४) इत्यनुपसर्गाद् घञ्विधानात्। अयमर्थः— त्वया यद् बीजमपामन्तर्निषिक्तं, तस्य बीजस्य प्रभाव इति चराचरमिदं विश्वं लोकैर्गीयत इति। अत्र मनुः—

"अप एव ससर्जादौ तासु वीर्यमवासृजत्।
तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्॥"

इति। अत्राप्शब्देन सूक्ष्मभूतान्युच्यन्त इति तद्विदः। 'अतश्चराचरं विश्वं प्रभवस्तस्य गीयस' इति पाठे यदमोघमपामन्तरित्यस्य पौनरुक्त्यं स्यात्॥

(विवरणम्)

अथ जगत्सृष्टिप्रकारमाहुः—

यदिति। हे अज! त्वया अपाम् अन्तः यद् बीजम् उप्तं चराचरम् अदः विश्वं तस्य प्रभावः गीयते। अज! न जायत इत्यजः। 'अन्येष्वपि दृश्यते' (३. २. १०१) इति डः। अनेन जननप्रतिषेधेन विनाशोऽपि प्रतिषिद्धः। 'जातस्य हि ध्रुवो मृत्युरि'त्युत्पन्नस्यैव भावस्य विनाशप्रतिपादनात्। जगतामेवोत्पत्तिः, त्वं तु नित्य एव इति भावः। अपां त्वयैवादौ सृष्टानां जलानाम्। अत्रापामित्यनेन सूक्ष्मरूपाणामपामुपादानं, चराचरं विश्वमित्यनेन तु स्थूलरूपाणामिति सृष्टिप्रकरणात् सिध्यति। अन्तः अन्तर्भागे यद् बीजं वीर्यम् उप्तं निषिक्तं चराचरम् अदो दृश्यमानं विश्वं तस्य प्रभाव इति गीयते। मन्वादिभिरिति शेषः। प्रकृष्टो भावः प्रभावो विभूतिः। 'श्रिणीभुवोऽनुपसर्गे' (३. ३. २४) इति अनुपसर्ग एव घञ्विधानात्। गीयते उच्यत इत्यर्थः। तस्य बीजस्य जगदुत्पादनसामर्थ्य-

---

१. 'द्वीज' ङ. पाठः. २. 'के गीय' ङ. पाठः. ३. 'शनप्र' घ. पाठः.

माहुः—अमोघमिति । सफलमित्यर्थः । जगदुत्पत्तेः प्रकृष्टं कारणमिति यावत् । त्वया पूर्वं जलं निर्माय तदन्तर्भागे निषिक्तस्य वीर्यस्य विभूतिरेव चराचरात्मकमिदं विश्वमिति मन्वादयो वदन्तीत्यर्थः । अत्र पुराणवचनं मनुवचनं च—

"हिरण्यगर्भो भगवान् सिसृक्षुर्विविधाः प्रजाः ।
अप एव ससर्जादौ तासु वीर्यमवासृजत् ॥
तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ।
तस्मादण्डात् समुत्पन्नं जगत् स्थावरजङ्गमम् ॥"

इति ॥ ५ ॥

**तिसृभिस्त्वमवस्थाभिर्महिमानमुदीरयन् ।**
**प्रलयस्थितिसर्गाणामेकः कारणतां गतः ॥ ६ ॥**

(प्रकाशिका)

तिसृभिरिति । उदीरयन् प्रकाशयन् । 'पश्चाद् भेदमुपेयुषे' (श्लो. ४) इत्यस्य प्रपञ्चनरूपेयमुक्तिः ॥ ६ ॥

न केवलं सृष्टिरेव त्वदुपक्रमा, अपितु स्थितिसंहारावपीत्याहुः—

तिसृभिरिति । त्वम् एकः प्रलयस्थितिसर्गाणां कारणतां गतः । त्वमेकः, नान्यसहाय इत्यर्थः । अनेन स्थितिप्रलययोर्विष्णुरुद्रोपज्ञत्वप्रतीतिर्निरस्ता । प्रलयस्थितिसर्गाणां प्रलयः संहारः, स्थिती रक्षा, सर्गः सृष्टिः, तेषामिति द्वन्द्वः । कारणताम् उपादानादिरूपतां गतः प्राप्तोऽसि । अत्र सर्गस्थितिप्रलयानामिति क्रममपहाय सर्गस्य चरमोपादानं तस्य पूर्वश्लोक (स्य ? एव) प्रतिपादितत्वेनानुवादरूपत्वादित्यवगन्तव्यम् । अविवक्षित एव वा क्रमः । ननु स्थितिप्रलयौ विष्णुरुद्रकर्तृकत्वेन प्रसिद्धाविति कथं त्वमेक

१. 'ला' घ. पाठः. २. 'वात्र क' ग. पाठः. ३. 'कौ प्र' घ. पाठः.

इत्युच्यते, अत आहुः—तिसृभिः अवस्थाभिः महिमानम् उदीरयन् इति। तिसृभिः हरिहरहिरण्यगर्भस्वरूपाभिः अवस्थाभिः अवस्थाविशेषैः। महिमानं माहात्म्यम् उदीरयन् प्रकाशयन्, निजमेव वैभवं मूर्तित्रयभेदेन प्रकटयन्नित्यर्थः। 'पश्चाद् भेदमुपेयुषे'(श्लो.४)इत्यस्य विवरणत्वेनेयमुक्तिः॥ ६॥

**स्त्रीपुंसावात्मभागौ ते भिन्नमूर्तेः सिसृक्षया।**
**प्रसूतिभाजः सर्गस्य तावेव पितरौ स्मृतौ॥ ७॥**

(प्रकाशिका)

एवं लिङ्गसृष्टिमुक्त्वा मिथुनसृष्ट्यर्थं ब्रह्मणो रूपमाह—

स्त्रीपुंसाविति। स्त्रीपुंसौ निपातनादच्[1] समासान्तः। भिन्नमूर्तेः परिगृहीतमूर्त्यन्तरस्य। प्रसूतिभाजः मिथुनीभूय सन्तानकारिणः। अत्र मनुः—

"द्विधा कृत्वात्मनो देहमर्धेन पुरुषोऽभवत्।
अर्धेन नारी तस्यां तु विराजमसृजत् प्रभुः॥"

इति॥ ७॥

(विवरणम्)

अथ मिथुनसर्गप्रकारमाहुः—

स्त्रीपुंसाविति। सिसृक्षया भिन्नमूर्तेः ते आत्मभागौ स्त्रीपुंसौ यौ तौ एव प्रसूतिभाजः सर्गस्य पितरौ स्मृतौ। सिसृक्षया स्रष्टुमिच्छया भिन्नमूर्तेः भिन्ना मायावलम्बनेन प्रकृतिपुरुषात्मना द्विधाकृता मूर्तिः शरीरं येन तस्य। ते तवात्मभागौ आत्मन एव भागौ अंशौ स्त्रीपुंसौ स्त्री च पुमांश्च स्त्रीपुंसौ। 'अचतुर—'(५.४.७७)इत्यादिना निपातनादच्[2] समासान्तः। तावेव नान्यावित्यर्थः। प्रसूतिभाजः प्रसूतिं प्रसवं भजत इति प्रसूतिभाक् तस्य, मिथुनी-

१. 'च्प्रत्ययान्त' ङ. पाठः. २. 'नाच्' घ. पाठः.

भूय सन्तानकारिण इत्यर्थः । सर्गस्य सृष्टेः पितरौ मातापितरौ । 'पिता मात्रा' (१.२.७०)इत्येकशेषः । स्मृतौ, मन्वादिभिरिति शेषः । अत्र मनुः—

"द्विधा कृत्वात्मनो देहमर्धेन पुरुषोऽभवत् ।
अर्धेन नारी तस्यां तु विराजमसृजत् प्रभुः ॥"

इति । अत्र विराडिति प्रपञ्चरूपः पुरुष उच्यते । तस्य च स्वरूपमित्थमुक्तं श्रीभागवते—'नाभिर्नभोऽग्निर्मुखमम्बु रेतो द्यौः शीर्षमाशाः श्रुतिरङ्घ्रिरुर्वी' इत्यादि । तव शरीरभेदमेव मन्वादयो मिथुनसर्गप्रकरणे स्त्रीपुरुषात्मना व्यपदिशन्तीत्यर्थः ॥ ७ ॥

**स्वकालपरिमाणेन व्यस्तरात्रिन्दिवस्य ते ।**
**[1]यावेव स्वप्नबोधौ तौ भूतानां प्रलयोदयौ ॥ ८ ॥**

(प्रकाशिका)

**स्वकालेति ।** स्वकालः परार्धद्वयं, तस्य परिमाणेन करणभूतेन । षट्त्रिंशत्सहस्रसङ्ख्यैरहोभिर्यथा स्वकालः परिमितो भवति, तथा व्यस्तानि विभक्तानि रात्रिन्दिवानि येनेत्यर्थः । अनेन स्वायुषोऽपि स्वयमेव व्यवस्थापक इतीश्वरस्येतरवन्न कालाधीनत्वमित्युक्तम् । अनेन स्वप्नबोधयोः प्रलयोदययोश्च स्वेच्छाधीनत्वमुक्तम् ॥ ८ ॥

( विवरणम् )

अथ वेदान्ताभिमतसृष्टिप्रलयप्रसङ्गेनापि स्तुवन्ति—

स्वकालेति । ते स्वप्नबोधौ यौ तौ एव भूतानां प्रलयोदयौ । ते जगदीशितुस्तव स्वप्नश्च बोधश्च स्वप्नबोधौ, लीलामात्रकल्पितौ निद्राप्रबोधावित्यर्थः । तावेव पञ्चभूतानां तत्कार्याणां प्रलयोदयौ प्रलयो महा-

---

१. 'यौ तु स्वप्नावबोधौ' मुद्रितकोशपाठः. २. 'सस्वका' ख. ग. पाठः. ३. 'व स्था' ख. पाठः.

प्रलयः उदयः सर्गः । तव निद्रैव जगतो महाप्रलयः । तत्सर्गस्तु तव प्रबोध एवेत्यर्थः । तदुक्तं वेदान्तविद्भिः—

"निःश्वसितमस्य वेदा वीक्षितमेतस्य पञ्च भूतानि ।
स्मृतमेतस्य चराचरमस्य च सुप्तं महाप्रलयः ॥"

इति । पुराणप्रसिद्धश्चायमर्थः—

"यदा स देवो जागर्ति तदेदं चेष्टते जगत् ।
यदा स्वपिति शान्तात्मा तदा सर्वं प्रलीयते ॥"

इति । स्वापप्रबोधयोर्निमित्तभूतस्याहोरात्रविभागस्यापि स्वेच्छामात्रनिर्मितत्वमाहुः—स्वकालपरिमाणेन व्यस्तरात्रिन्दिवस्य । स्वस्य कालः स्वकालः, स च द्विपरार्धसंवत्सरपरिमितः, तस्य परिमाणमियत्ता, तेन करणभूतेन व्यस्तं विभक्तं रात्रिन्दिवं येन तस्य । रात्रिश्च दिवा च रात्रिन्दिवम् । 'अचतुर—'(५.४.७७)इत्यादिना निपातनादच् समासान्तः । परार्धद्वयपरिमितेनात्मनः परमायुषा यथासम्भवं कल्पिताहोरात्रविभागस्येत्यर्थः । अनेन स्वायुषोऽपि स्वयमेव व्यवस्थापक इत्युक्तं भवतीति जगदीश्वरस्य नेतरजनवत् कालाधीनत्वं, नापि कर्माधीनत्वमिति लोकतो व्यतिरेको ध्वन्यते ॥ ८ ॥

**जगद्योनिरयोनिस्त्वं जगदन्तो निरन्तकः ।**
**जगदादिरनादिस्त्वं जगदीशो निरीश्वरः ॥ ९ ॥**

(प्रकाशिका)

जगद्योनिरिति । योनिरीश इत्याभ्यां क्रमादुपादानत्वमधिष्ठातृत्वं चोक्तम् । आदिरन्त इत्याभ्यां जगतः प्राक् पश्चाच्चास्यावस्थितिरुक्ता । अयोनिरित्यादिभिरस्योपादानान्तरादिविरह उक्तः ॥ ९ ॥

( विवरणम् )

ननूपादानादिना विना कथं स्वापप्रबोधमात्रेण जगतः प्रलयोद्भवावुपपद्येतेरत आहुः—

जगद्योनिरिति । त्वं जगद्योनिः । जगतः स्थावरजङ्गमात्मकस्य प्रप-

अस्य (योनिः) उपादानकारणमसि । अनाद्यविद्यातिरस्कृतस्य स्वरूपस्या-ज्ञानादेवाधिष्ठानभूते त्वयि जायमानस्य प्रपञ्चभ्रमस्य सर्पभ्रमस्य रज्जुरिव त्वमेवोपादानकारणमसीत्यर्थः । तदुक्तं—

"यदज्ञानाद् विश्वं भवति फणिवद् रज्जुशकले
निलीनं यज्ज्ञाने भवति सनिदानं त्रिभुवनम् ।
यदुच्चैराम्नायैः सततमवगम्यं मुनिजनै-
स्तदेतद् ब्रह्माहं सहजपरमानन्दसुभगम् ।

इति । त्वं पुनः कारणान्तररहित एवेत्याहुः—अयोनिरिति । योनिः उपादानादिकारणम् अस्य नास्तीत्ययोनिः । इत्थं देवस्य जगदुपादानत्वमुक्त्वा कर्तृत्वमस्याहुः—त्वं जगदीश इति । जगतामीशः स्वामी । उत्पादको रक्षिता चेत्यर्थः । त्वं पुनरीशान्तररहित इत्याहुः— निरीश्वर इति । ईश्वररहितः । उत्पादको रक्षिता च तव नास्तीत्यर्थः । जगद्योनित्वाद् जगदुत्पत्तेः पूर्वमपि विद्यमान एव त्वमित्याहुः—जगदादिरिति । जगतामादिः । अत एवानादिः आदिरस्य नास्तीत्यनादिः, पूर्वकोटिरहित इत्यर्थः । संहर्तृत्वमप्याहुः—त्वं जगदन्त इति । जगतामन्तः अ(व)धिकरोऽसि । त्वं पुनः संहर्तृरहित इत्याहुः—निरन्तक इति । अन्तकोऽस्य नास्तीति निरन्तकः, अपरकोटिरहित इत्यर्थः ॥ ९ ॥

**आत्मानमात्मना वेत्सि सृजस्यात्मानमात्मना ।**
**आत्मना कृतिना च त्वमात्मन्येव प्रलीयसे ॥ १० ॥**

(प्रकाशिका)

अथ पराधीनज्ञानसर्गस्थितिप्रलयात् प्रपञ्चादस्य व्यतिरेकमाह—

आत्मानमिति । आत्मानमात्मना वेत्सीति उत्पत्स्यमाने स्वात्मनि तदुत्पत्त्युपायं स्वयमेव जानासीत्यर्थः । सृजस्यात्मानमात्मना स्व-

१. 'ग' क. ख. ग. पाठः.

ज्ञातेनोपायेन सृज्ये स्वात्मनि स्वयमेव सृजसीत्यर्थः । आत्मना कृतिना च त्वमात्मन्येव प्रलीयस इति । कृतिना कृतकृत्येन । कृतकृत्यत्वं चात्मनः स्थितौ । कृतिना आत्मना स्वात्मन्येव प्रलीयस इत्यर्थः । अत्र मनुः—

"एवं स सर्वं सृष्ट्वेदं मां चाचिन्त्यपराक्रमः ।
आत्मन्यन्तर्दधे भूयः कालं कालेन पीडयन् ॥"

इति ॥ १० ॥

( विवरणम् )

ननूत्पादकान्तररहितत्वे[2] दृश्यमानस्य चतुर्मुखस्य[3] कथमुत्पत्तिरित्यत्राहुः—

आत्मानमिति । त्वम् आत्मना आत्मानं वेत्सि । आत्मना स्वयमेव । 'स्वयमात्मने'त्यमरः । आत्मानं सृज्यं स्वदेहं वेत्सि जानासि । सृष्टेः सृज्यस्वरूपावगमाधीनत्वाद् आदौ सृज्यं स्वदेहं तत्सृष्ट्युपायं च स्वयमेव जानासीत्यर्थः । तदनन्तरं तु सृजसीत्याहुः—आत्मना आत्मानं सृजसि इति । आत्मना स्वयमेव आत्मानं स्वदेहं सृजसि सृष्टं करोषि । 'सृज विसर्गे' इति धातुः । स्वयमेव स्वदेहसृष्टिरित्यर्थः । स्वदेहस्यापि स्वयमेव संहर्तेत्याहुः—कृतिना आत्मना आत्मन्येव प्रलीयसे चेति । कृतिना कृतकृत्येन, स्वावतारकार्याणां विधानान्निर्वृत्तेनेत्यर्थः । आत्मना स्वदेहेन करणभूतेन आत्मनि स्वस्मिन्नेव प्रलीयसे प्रकर्षेण लीनो भवसि । त्वमादावात्मदेहस्वरूपं तत्सर्गोपायं च स्वयमेव जानासि । ततः[4] परं तं सृजसि । सर्गानन्तरं पुनः परार्धद्वयवत्सरपर्यन्तं रक्षिते स्वदेहे स्वावतारकार्येषु च निर्वृत्तेषु कृतकृत्यः सन् स्वदेहं स्वात्मन्येव लीनं करोषीत्यर्थः । अत्र मनुः—

"एवं स सर्वं सृष्ट्वेदं मां चाचिन्त्यपराक्रमः ।
आत्मन्यन्तर्दधे भूयः कालं कालेन पीडयन् ॥"

---

१. 'ने' घ. पाठः. २. 'ना' घ. पाठः. ३. 'स्वास्य शरीरस्य क' घ. पाठः. ४. 'तश्च तं' क. ख. ग. पाठः.

इति। अत्र स्वाधीनात्मसर्गस्थितिप्रलयस्यास्य ब्रह्मणः पराधीनसर्गादेः प्रपञ्चाद् व्यतिरेकोक्तिः ॥ १० ॥§

**उद्घातः प्रणवो यासां न्यायैस्त्रिभिरुदीरणम्।**
**कर्म यज्ञः फलं स्वर्गस्तासां त्वं प्रभवो गिराम् ॥ ११ ॥**

**(प्रकाशिका)**

**उद्घात इति। उद्घात आरम्भः। 'स्यादभ्यादानमुद्घात आरम्भ' इति सिंहः। न्यायैरुदात्तादिभिः। कर्म प्रतिपाद्यम्। गिराम् अर्थाद् वेदानाम् ॥ ११ ॥**

**(विवरणम्)**

**वेदा अपि त्वदुद्भूता एवेत्याहुः—**

उद्घात इति। त्वं तासां गिरां प्रभवः। तासां तादृशीनां गिरां वाचाम्। यच्छब्दवाक्यविशेषणवशाद् वेदवाक्यानामित्यर्थः। प्रभवः उद्भवस्थानमसि। अत्र तार्किकास्तावत्—कविरिव काव्यं महेश्वरो वेदवाक्यान्यारचितवानित्याहुः। वेदान्तिनस्तु—निःश्वासरूपेण परब्रह्मण एवोद्भूयमाना(?) वेदा इत्याहुः। सर्वथापि त्वदुद्भवा वेदा इत्यर्थः। कीदृशीनां गिरामित्यत्र तासां वेदत्वद्योतकं विशेषणत्रयम्। तत्रादावध्ययनारम्भसमय एवावगम्यं विशेषमाहुः—यासां प्रणव उद्घात इति। यासां गिरां प्रणवः प्रणवोच्चारणम् उद्घात आरम्भो भवति। 'स्यादभ्यादानमुद्घात आरम्भ' इति सिंहः[1]। या गिरः प्रणवोच्चारणपूर्वकमुच्चार्यन्त[2] इत्यर्थः। अनेनारम्भसमय एव गीरन्तर-

१. 'त्वमरः। या' घ. पाठः. २. 'च्यन्त' क. पाठः.

§ इत उत्तरं—

"द्रवः सङ्घातकठिनः स्थूलः सूक्ष्मो लघुर्गुरुः।
व्यक्तो व्यक्तेतरश्चासि प्राकाम्यं ते विभूतिषु ॥"

इत्याधिकं पद्यं मुद्रितकोशे दृश्यते।

व्यतिरेक उक्तः । अध्ययनवेलायामपि व्यतिरेकमाहुः—यासां त्रिभिर्न्यायैरुदीरणम् इति । त्रिभिर्न्यायैरुदात्तानुदात्तस्वरितभेदेन त्रिभिः (न्यायैः) व्यवस्थाभिः उदीरणम् उच्चारणं भवति । अथार्थज्ञानसमयेऽपि व्यतिरेकमाहुः—यासां यज्ञः फलं स्वर्गः कर्म इति । यज्ञो यागः तस्य फलं स्वर्गश्च कर्म प्रतिपाद्यं भवतीति शेषः । प्रतिपादनक्रियायां यज्ञस्वर्गयोः कर्मत्वात् कर्मेत्युक्तम् । यासां गिरां यागश्च तत्फलभूतः स्वर्गश्च प्रतिपाद्यो भवतीत्यर्थः ॥ ११ ॥

**त्वं पितॄणामपि पिता देवानामपि दैवतम्[1] ।**
**परतोऽपि परश्चासि विधाता वेधसामपि ॥ १२ ॥**

(प्रकाशिका)

त्वमिति । अत्र पूर्वार्धेन वेदेषु प्राधान्येन यष्टव्ययोः पितृदेवगणयोरपि पतित्वमुक्तम् । परतो विश्वोत्तीर्णात् पुरुषात् परोऽधिकः । वेधसां मरीच्यादीनामपि विधाता स्रष्टा ॥ १२ ॥

(विवरणम्)

उक्तप्रकारसिद्धमस्य सर्वोत्कर्षमाहुः—

त्वमिति । त्वं पितॄणाम् अपि पिता असि । पितॄणाम् अग्निष्वात्तादीनाम् । अपिशब्दः पितॄणां पुराणप्रसिद्धसर्वोत्कर्षमाह । 'इज्यन्ते पितरो देवैः सुरेन्द्रादिभिरप्युत' इत्युक्तत्वात् । पिता माननीयोऽसि । देवाधिपतित्वमप्याहुः—त्वं देवानामपि दैवतम् असि इति । इन्द्रादिदेवानामप्यधीश्वरोऽसि । कर्मकाण्डे यष्टव्यतया प्रसिद्धानां पितृदेवगणानामपि त्वमेव पतिरित्यर्थः । तेषामप्यधिपतित्वे हेतुमाहुः—त्वं परतः अपि परः च असि इति । प्रपञ्चोत्तीर्णाद् मायाशबलात् पुरुषादपि परः परमात्मैवासीत्यर्थः ।

---

१. 'देवता' मुद्रितकोशपाठः.

अत एवाहुः—त्वं वेधसाम् अपि विधाता असि। वेधसां जगत्सर्गकृतां मरीच्यादीनामपि विधाता स्रष्टासि। वक्ष्यति च मरीच्यादीनां जगदेकदेशकर्तृत्वं 'सर्गशेषविधायित्वाद्'(स० ६. श्लो. ९)इत्यत्र ॥ १२॥

**त्वामामनन्ति प्रकृतिं पुरुषार्थप्रवर्तनीम्।**
**तद्दर्शिनमुदासीनं त्वामेव पुरुषं विदुः ॥ १३॥**

(प्रकाशिका)

त्वामिति। प्रकृतिः मूलकारणम्। पुरुषस्यार्थान् भोगान् प्रवर्तयतीति कर्तरि ल्युट्। तद्दर्शिनं प्रकृतिदर्शिनम्। उदासीनं प्रवृत्तिरहितम् ॥ १३ ॥

(विवरणम्)

सांख्यसिद्धान्तसिद्धौ प्रधानेश्वरावपि त्वमेवेत्याहुः

त्वामिति। त्वां पुरुषार्थप्रवर्तनीं प्रकृतिम् आमनन्ति। त्वां, नान्यं कञ्चिदित्यर्थः। पुरुषार्थप्रवर्तनीं पुरुषस्यार्थान् भोगान् प्रवर्तयतीति तथा। कर्तरि ल्युट्। तादृशीं प्रकृतिम्। 'प्रधानं प्रकृतिः स्त्रियामि'त्यमरः। आमनन्ति। 'म्ना अभ्यासे' इति धातुः। 'पाघ्राध्मास्थाम्ना–'(७.३.७८)इत्यादिना मनादेशः। आम्नायसिद्धार्थत्वेन व्यपदिशन्तीत्यर्थः। साङ्ख्यस्मृतय इति शेषः। सत्त्वरजस्तमसां साम्यावस्था प्रधानमिति साङ्ख्यानां व्यवहारः। तामेव मूलप्रकृतिरिति प्रकृतिरिति च ते व्यवहरन्ति। तदुद्भूतो महदादिप्रपञ्च इति तेषां मतम्। तदुक्तं साङ्ख्यसप्तत्यां—

"मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त।
षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥"

इति। तत्र साङ्ख्या द्विविधाः निरीश्वराः सेश्वराश्चेति[1]। तत्र निरीश्वराः साङ्ख्या अन्यनिरपेक्षात् प्रधानादेव जगदुद्भवस्थितिविलया इत्याहुः। सेश्वराः पुनरी-

१. 'श्च। त' घ. पाठः.

श्वरस्य निष्क्रियस्यापि सान्निध्यमात्रेणैव प्रधानाज्जगदुद्भवादय इत्याहुः । तदुक्तं—

"यथा सन्निधिमात्रेण गन्धः क्षोभाय जायते ।
मनसो नोपकर्तृत्वात् तथासौ परमेश्वरः ॥"

इति । तत्र सेश्वरसाङ्ख्यमतसिद्धा प्रकृतिरनेन वाक्येनोच्यते । पुरुषस्यार्थान् प्रवर्तयितुमेव तस्या व्यापार इति च तेषां मतम् । तदप्युक्तं साङ्ख्यसप्तत्यां—

"रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्तम् ।
पुरुषस्य तथात्मानं प्रकाश्य विनिवर्तते प्रकृतिः ॥"

इति । सेश्वरसाङ्ख्यास्त्वामेव जगत्सर्गादिकरीं मूलप्रकृतिमाहुरित्यर्थः । साङ्ख्यसम्मतः पुरुषोऽपि त्वमेवेत्याहुः—त्वामेव तद्दर्शिनम् उदासीनं पुरुषं विदुः इति । तां प्रकृतिं द्रष्टुं शीलमस्येति तद्दर्शी, तम् । उदासीनं निर्व्यापारं पुरुषम् ईश्वरं विदुः । 'विदो लटो वा'(३. ४. ८३) इति णलादिविकल्पः । विदन्तीत्यर्थः । निर्व्यापारस्यापि यस्य सन्निधिमात्रेण प्रधानस्य जगत्सर्गादिसामर्थ्यमिति साङ्ख्यविदो वदन्ति, सोऽपि त्वमेवेत्यर्थः ॥ १३ ॥

**त्वमेव हव्यं होता च भोज्यं भोक्ता च शाश्वतम् ।**
**वेद्यश्च वेदिता चासि ध्याता ध्येयं च यत्परम् ॥ १४ ॥**

(प्रकाशिका)

**त्वमिति** । हव्यं हविः । भोग्यं पशुवर्गादि । शाश्वतमित्यनेन भोग्यस्य कर्मविनाशेऽप्यवस्थानमुक्तम् । अत्र पूर्वार्धेन वेदेषु कर्मभागविषयोऽर्थः उत्तरार्धेन ज्ञानभागविषयोऽर्थश्चोच्यते । एषु च स्तुतिवाक्येष्वन्यथापि योजयन्ति तद्विदः ॥ १४ ॥

---

१. 'ते । तत्र पु' घ. पाठः. २. 'ज्यं', ३. 'तः', ४. 'य' मुद्रितकोशपाठः. ५. 'चतुर्वर्गो' क, ग. पाठः.

(विवरणम्)

अथास्य सर्वात्मकत्वप्रतिपादनेन स्तुतिगोचरत्वं निराकुर्वन्तः स्तुतिमुपसंहरन्ति—

त्वमिति । त्वम् एव हव्यं होता च असि । हव्यं पशुपुरोडाशादि-रूपं होमसाधनं होता यजमानश्चासि । हविर्यजमानश्च न त्वत्तो भिन्नावित्यर्थः । भोग्यभोक्तृस्वरूपत्वमप्याहुः—त्वम् एव शाश्वतं भोग्यं भोक्ता च असि इति । शाश्वतं नित्यं भोग्यं फलं भोक्ता यागादिकर्मफलानुभोक्ता चासि । स्वर्गपश्वादिरूपं फलं तद्भोक्ता चासीत्यर्थः । अत्र शाश्वतमिति भोग्यविशेषणेन 'यत् कर्मफलं तत् कर्मनाशे नश्यति, यथा मर्दनकर्मनाशे तत्फलभूतं सुखम् । तस्मादग्निहोत्रादिकर्मणां कालान्तरे स्वर्गादिफलदातृत्वं वदतां वेदवाक्यानामुन्मत्तप्रलपितप्रायत्वमेव' इति नास्तिकानुमानं निरस्यते । अग्निहोत्रादिफलं तु नित्यमेव, न कर्मविनाशे नश्यतीति भावः । अनेन पूर्वकाण्डप्रतिपाद्यानामर्थानां ब्रह्मात्मकत्वं प्रतिपादितम् । अथोत्तरार्धेनोत्तरकाण्डप्रतिपाद्यार्थस्यापि तदात्मकत्वमाहुः—वेद्यमित्यादिना । त्वं वेद्यं वेदिता च असि । वेद्यं प्रपञ्चः वेदिता ज्ञाता । प्रपञ्चः प्रपञ्चसाक्षी च त्वमेवेत्यर्थः । उपास्योपासकभेदप्रतिभासस्यापि त्वमेवाधिष्ठानमित्याहुः— त्वं ध्याता तत्परं ध्येयं च असीति । ध्याता उपासका जीवाः । जातावेकवचनम् । एकजीवपक्षापेक्षया वा । तत्परं तस्मादुपासकात् परम् उत्कृष्टम् ध्येयम् उपास्यं च । उपासका मुमुक्षवो जीवाः । उपासकेभ्यः परं सकलनिष्कलभेदभिन्नं स्वरूपं त्वमेवासीत्यर्थः । तदिति पृथक्पदं वा । वेदान्तवाक्येषु तच्छब्दवाच्यतया प्रसिद्धमित्यर्थः ॥ १४ ॥

इति तेभ्यः स्तुतीः श्रुत्वा याथार्थ्यहृदयङ्गमाः ।
प्रसादाभिमुखो वेधाः प्रत्युवाच दिवौकसः ॥ १५ ॥

---

१. 'दिहो' क. पाठः. २. 'न वचनेन पू' घ. पाठः. ३. 'यथार्था हृ' मुद्रितकोशपाठः.

(प्रकाशिका)

इतीति। इत्थम्भूताः। स्तुतिर्नाम स्वाभिप्रायानुरूपं देवतावीर्योद्बोधनम्। अभिप्रायश्चात्र वक्ष्यते 'तदिच्छामः'(श्लो.५०)इत्यादिना। तत्र च सेनानीसृष्टिः सृष्टेन च लोकस्थितिः तारकासुरसंहारः तस्य च निरतिशयशक्तिमत्त्वं चेत्येतत् सर्वमभिप्रेतम्। तदनुरूपविधातृवीर्योद्बोधनं चात्र स्पष्टम्। याथार्थ्येन स्वरूपानतिक्रमेण। प्रसादेनाभिमुखोऽनुग्रहोन्मुखः। अनेनास्य सुप्रसादत्वाल्लोकतो व्यतिरेकः प्रतीयते। लोके हि स्तुतय आरोपितप्रायार्थाः प्रसादनाय, इह तु यथार्था इति ॥ १५ ॥

(विवरणम्)

अथ ब्रह्मणः प्रतिवचनं प्रस्तौति—

इतीति। वेधाः तेभ्यः इति स्तुतीः श्रुत्वा प्रसादाभिमुखः दिवौकसः प्रत्युवाच। वेधाः ब्रह्मा तेभ्यः देवेभ्यः सकाशाद् इति उक्तप्रकाराः स्तुतीः। स्तुतिर्नाम स्वाभिप्रायानुरूपं देवतावीर्योद्बोधनम्। अभिप्रायश्चात्र 'तदिच्छामो विभो स्रष्टुं सेनान्यं तस्य शान्तये' (श्लो. ५०) इति वक्ष्यते। अतस्तादृशवीर्यतारकासुरविमर्दनक्षमस्य सेनान्यः सृष्टौ यद् ब्रह्मणो वीर्यं तदुद्बोधनं 'नमोऽस्तु'(श्लो.४)इत्यादिभिः श्लोकैः कृतम्। लीलामात्रकल्पितसकलजगत्सृष्टिस्थितिप्रलयस्य तव सेनानीसृष्टौ कः प्रयास इति स्तुतिवचनानां तात्पर्यार्थः। श्रुत्वा आकर्ण्य। प्रसादाभिमुखः अनुग्रहोन्मुखः सन् दिवौकसः देवान् प्रत्युवाच प्रतिवचनं कृतवान्। ब्रह्मणः स्तुतौ सामान्यस्तुतिव्यतिरेकमाह— याथार्थ्यहृदयङ्गमा इति। याथार्थ्येन यथार्थत्वेन हृदयङ्गमाः मनोहराः। लोके हि प्रसादनाय क्रियमाणाः स्तुतयः प्रायेणारोपितार्थाः, ब्रह्मणः स्तुतयस्तु यथार्था एवेति भावः ॥ १५ ॥

**पुराणस्य कवेस्तस्य चतुर्मुखसमीरिता।**
**प्रवृत्तिरासीच्छब्दानां चरितार्था चतुष्टयी ॥ १६ ॥**

---

१. 'न्यः' ख. ग. च पाठः. २. 'देवत्वाल्लो' घ. ङ. पाठः. ३. 'मसे' घ. पाठः. ४. 'त्सर्गस्थि' घ. पाठः. ५. 'न्यः' घ. पाठः

(प्रकाशिका)

प्रतिवचनप्रस्तावे विशेषमाह —

**पुराणस्येति । पुराणस्याद्यस्य कवेर्निबन्धुः प्राज्ञस्य वा । चतुर्भिर्मुखैः समीरिता सम्यगीरिता सकलसंस्कारसमग्रमुच्चारिता । प्रवृत्तिः प्रवाहः । पुराणकविसम्बन्धात् समग्रसंस्कारः । अत एव चरितार्था । चतुर्भ्यो मुखेभ्यश्चतुर्धा शब्दानां प्रवृत्तिरासीदित्यर्थः । चरितार्थत्वं त्वौपचारिकं द्रष्टव्यम् । यथा देवाः सर्वतोमुखत्वादस्य सुलभसाम्मुख्याः सन्तः सर्व एव युगपत् परितश्चोपतस्थिरे, तथासावपि तान् सर्वानेव चतुर्मुखविनिर्गतया चतुष्टय्या शब्दानां प्रवृत्त्या युगपत् परितश्च प्रत्युक्तवानित्यर्थः । दक्षिणावर्तस्तु — वैखर्यादिरूपेण चतुष्टयीति व्याचष्ट । तत् तु निरूपयितव्यम् ॥ १६ ॥**

(विवरणम्)

अथास्य प्रतिवचनप्रस्तावे विशेषमाह—

पुराणस्येति । पुराणस्य कवेः चतुर्मुखसमीरिता चतुष्टयी शब्दानां प्रवृत्तिः चरितार्था आसीत् । पुराणस्य आद्यस्य कवेः प्रवाचः सर्वज्ञस्य वा । 'वाक्प्रबन्धविधाता च सर्वज्ञश्च कविः स्मृत' इति भोजः । चतुर्मुखसमीरिता चतुर्भिर्मुखैः वदनैः समीरिता सम्यक् सकलसंस्कारसमग्रम् ईरिता उच्चारिता चतुर्मुखोदीरितत्वादेव चतुष्टयी । 'संख्याया अवयवे तयप्' (५. २. ४२) । अवयवचतुष्टययुक्तेत्यर्थः । शब्दानां प्रवृत्तिर्वचसां प्रवाहः चरितार्था कृतार्था आसीद् बभूव । चतुर्भ्यो मुखेभ्यः प्रवृत्ताश्चत्वारो वाक्प्रवाहाः कृतार्था बभूवुरित्यर्थः । यथा देवाः सर्वतोमुखत्वादस्य सुलभसाम्मुख्याः सन्तः सर्व एव युगपत् परितश्चोपतस्थिरे, तथासावपि तान् सर्वानपि चतुर्भिर्वदनैर्युगपदेव प्रत्युवाचेत्यर्थः । सर्वेषामपि युगपदेव प्रतिवचनसिद्धेः कृतार्थत्वम् । अत्र वक्तुः कृतार्थत्वं वाक्प्रवृत्तावुपचर्यते, वाक्-

प्रवृत्तेरचेतनायाः कृतार्थत्वानुपपत्तेः । इह वाक्प्रवाहस्य पुराणकविसम्बन्धात् समग्रसंस्कारवत्त्वं, चतुर्मुखोच्चारितत्वाच्चतुष्टयत्वं, तेन कृतार्थ(त्व)मिति विभागः ॥ १६ ॥

**स्वागतं स्वानधीकारान् प्रभावैरवलम्ब्य वः ।**
**युगपद् युगबाहुभ्यः प्राप्तेभ्यः प्राज्यविक्रमाः! ॥१७॥**

(प्रकाशिका)

स्वागतमिति । स्वागतं शोभनमागमनम् । अधीकारान् 'उपसर्गस्य घञि—'(६. ३. १२२) इति दीर्घः । वः युष्मभ्यम् । प्रभावैः स्वानधीकारानवलम्ब्य स्थितेभ्यो युष्मभ्यं स्वागतमित्यर्थः । युगपदित्यनेन प्राप्तेः सहेतुकत्वं सूचयति । युगानीव बाहवो येषामिति समासः । प्राज्यं प्रभूतम् ॥१७॥

(विवरणम्)

विधातुः प्रतिवचनप्रकारमाह स्वागतमित्यादिभिरेकादशभिः श्लोकैः । तत्रादौ स्वागतमाह—

स्वागतमिति । हे प्राज्यविक्रमाः! वः स्वागतम्[2] । हे प्राज्यविक्रमाः! प्राज्यः प्रभूतो विक्रमो येषाम् । 'प्रभूतं प्रचुरं प्राज्यमि'त्यमरः. 'विक्रमस्त्वतिशक्तिता' इति च । अनया सम्बुद्ध्या तेषां परिभवावकाशाभावो ध्वन्यते । वः युष्मभ्यं स्वागतं शोभनमागमनम् । अस्त्विति शेषः । भवतामागमनकार्यं शोभनं भूयादिति भावः । प्राज्यविक्रमत्वस्य फलमाह—प्रभावैः स्वान् अधीकारान् अवलम्ब्येति । स्थितेभ्य इति शेषः । प्रभावैः सामर्थ्यैः स्वान् आत्मीयान् । 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने' इति सिंहः । अधीकारान् 'उपसर्गस्य घञ्यमनुष्ये बहुलम्'(६.३.१२२) इति दीर्घः[3] । अवलम्ब्य धृत्वा स्थितेभ्यः । स्वाधिकारावलम्बने शक्तत्वमाह—

---

१. 'नाग' ग. पाठः. २. 'तम् । प्राज्यः' घ. पाठः. ३. 'र्घा' घ. पाठः.

युगबाहुभ्य इति । युगा इव बाहवो येषाम् । 'यानाद्यङ्गे युगः पुंसि' इत्यमरः । आगमनं सहेतुकमिति द्योतयन्नाह— युगपत् प्राप्तेभ्य इति । युगपत् सहैव प्राप्तेभ्य आगतेभ्यः । तत्र आत्मीयानधिकारानवलम्ब्य पृथगवस्थितानां सम्भूयागमनवचनेनागमनं सहेतुकं, स च हेतुर्महानिति च व्यज्यते ॥१७॥

**किमिदं द्युतिमात्मीयां न बिभ्रति यथापुरम्[1]।**
**हिमक्लिष्टप्रसादानि[2] ज्योतींषीव मुखानि वः ॥१८॥**

(प्रकाशिका)

किमिति । किं प्रश्ने । इदमिति वक्ष्यमाणं वैकृतं परामृष्टम् । इदं किंहेतुकमित्यर्थः । तदाह किमित्यादिना श्लोकाष्टकेन । तत्र सामान्यतो निरूपयति — द्युतिमिति । आत्मीयां नैसर्गिकीम् । न तु सर्वथा न बिभ्रतीत्याह — यथापुरमिति । ज्योतींषि चन्द्रतारकादीनि ॥ १८ ॥

( विवरणम् )

इत्थं सूचितमर्थं किञ्चिद् विवृणोति—

किमिति । इदं किम् । इदंशब्देन वक्ष्यमाणं मुखवैवर्ण्यादिकं सर्वप्रत्यक्षदृष्टं परामृष्टम् । किंशब्दः प्रश्ने । दृश्यमानमिदं सर्वं किंकारणकमित्यर्थः । तत्रादौ सकलसुरसाधारण्येन मुखवैवर्ण्यमेवाह — वः मुखानि आत्मीयां द्युतिं यथापुरं न बिभ्रति इति । वः युष्माकं मुखानि वदनानि आत्मीयां स्वाभाविकीं द्युतिं कान्तिं । यथापुरम् । पदार्थानतिवृत्तौ यथाशब्दः । पूर्वकालानतिक्रमेण, पूर्ववदिति यावत् । न बिभ्रति न दधति । भवतां मुखानि पूर्ववत् कान्तिं न दधतीत्यर्थः । मुखवैवर्ण्यमुपमया स्फुटयति — हिमक्लिष्टप्रसादानि ज्योतींषीवेति । हिमेन तुषारेण क्लिष्टः क्लेशं

---

१. 'रा' मुद्रितकोशपाठः. २. 'काशानि' मुद्रितकोशपाठः. ३. 'मा' ख. ग. घ. पाठः. ४. 'रम् । ज्यो' ख. घ. पाठः. ५ 'न्त्रादौ' ङ. पाठः.

प्राप्तः प्रसादः [illegible] येषां तानि ज्योतींषि चन्द्रादीनीव । अनेनोपमानेन कालवशात् प्राप्तस्य वैवर्ण्यस्य कालान्तरे निवृत्तिरप्यस्तीति द्योत्यते ॥ १८ ॥

**प्रशमादर्चिषामेतदनुद्गीर्णसुरायुधम् ।**
**वृत्रस्य हन्तुः कुलिशं कुण्ठिताश्रीव लक्ष्यते ॥ १९ ॥**

(प्रकाशिका)

अथ विशेषतो निरूपयति—

**प्रशमादिति** । अनुद्गीर्णसुरायुधम् अनुद्गतनानारत्नच्छायम् । अनेन कार्यमुखेनार्चिःप्रशम उपपादितः । अश्रिः कोटिः । अर्चिषां प्रशमादिति कुण्ठिताश्रित्वोत्प्रेक्षणे हेतुः । अत्रार्चींषि किरणाः, न तु ज्वालाः, तासामूर्ध्वमुखत्वेनाश्रिवत् सर्वतोमुखत्वासिद्धेः ॥ १९ ॥

( विवरणम् )

इत्थं सामान्येनोक्तं विशेषतः प्रतिपादयति सप्तभिः श्लोकैः । तत्रादौ प्राधान्यान्महेन्द्रावस्थामाह—

प्रशमादिति । वृत्रस्य हन्तुः एतत् कुलिशं कुण्ठिताश्रि इव लक्ष्यते । वृत्रस्य हन्तुः वृत्राभिधानस्य दानवपतेः निग्रहीतुः । देवेन्द्रस्य तादृशावस्थाप्राप्तेरनौचित्यमुक्तम् । एतद् दृश्यमानं कुलिशं वज्रम् । अनेन अचलेष्वप्यकुण्ठितत्वं द्योत्यते । कुण्ठिताश्रि कुण्ठिताः क्षीणधारा अश्रयः कोटयो यस्य । 'स्त्रियः पाल्यश्रिकोटय' इत्यमरः । तथाभूतमिव लक्ष्यते । कुण्ठिताश्रित्वोत्प्रेक्षायां च हेतुमाह—अर्चिषां प्रशमाद् अनुद्गीर्णसुरायुधमिति । अर्चिषां किरणानां, न तु ज्वालानाम् । तासामूर्ध्वमुखत्वेन सर्वतोमु(खश्री? खाश्रि)साधर्म्यानुपपत्तेः । प्रशमात् संक्षयाद् अनुद्गीर्णसुरायुधम् अनुद्गीर्णम् अनुद्गतं सुरायुधम् इन्द्रचापरूपा नानारत्न-

---

१. 'पितः प्र' क. पाठः. २. 'श्यो य' क. ख. ग. पाठः. ३. 'यां हे' घ. पाठः.

प्रभा यस्य तत् तथा । नानारत्नप्रभानुद्गमनादर्चिःप्रशमः सुखावसेयः । अर्चिःप्रशमनेन कुण्ठिताश्रित्वमुत्प्रेक्ष्यत इति भावः ॥ १९ ॥

**किञ्चायमरिदुर्वारः पाणौ पाशः प्रचेतसः ।**
**मन्त्रेण हतवीर्यस्य फणिनो दैन्यमाश्रितः ॥ २० ॥**

(प्रकाशिका)

**किञ्चेति । अपि च दैन्यं चेतसोऽनौजस्यम् । तेन तत्कार्यभूतमनुज्ज्वलत्वमत्र लक्ष्यते । नन्विन्द्रावरुणावादित्येष्वन्तर्भूतौ । सत्यम् । अधिकारभेदात् तु विग्रहभेदो व्यवहारभेदश्च ॥ २० ॥**

(विवरणम्)

अथ वरुणावस्थामाह—

किञ्चेति । किञ्च प्रचेतसः पाणौ अयं पाशः मन्त्रेण हतवीर्यस्य फणिनः दैन्यम् आश्रितः । किञ्च अपिचेत्यर्थः । प्रचेतसः वरुणस्य । 'प्रचेता वरुणः पाशी'त्यमरः । पाणौ हस्ते वर्तमान इत्यर्थात् सिध्यति । अयं दृश्यमानः । अनेन दैन्यस्य प्रत्यक्षप्रमाणसिद्धत्वमुक्तम् । यमवरुणौ पाशहस्ताविति प्रसिद्धिः । मन्त्रेण अर्थाद् गरुडदैवतेन हतवीर्यस्य हतं प्रतिहतं वीर्यं प्रभावो यस्य । 'वीर्यं बले प्रभावे च'त्यमरः । तस्य फणिनः दैन्यं दीनत्वम् । 'दौर्गत्यादेरनौजस्यं दैन्यं कार्ष्ण्यामृजादिकृत्' (४. १४) इति दशरूपके । मानस ओजःक्षय इत्यर्थः । तेनात्र तत्कार्यभूतमनुज्ज्वलत्वं लक्ष्यते । आश्रितः प्राप्तः । पाशस्य पूर्वावस्थामाह — अरिदुर्वार इति । अरिभिः शत्रुभिः दुर्वारः दुःखेन वार्यत इति तथा । कृच्छ्रार्थे खल् । अरिजनैरवारणीयशक्तिरित्यर्थः । अनेनास्यैतादृशदशाप्रवेश(न)वकाशो निरूप्यते। अपकारिजनदुर्वारः फणी यथा मन्त्रप्रमथितशक्तिर्दीनां दशामाप्नोति, तथा

---

१. 'ज्ज्वल्यम' क. घ. ङ. पाठः.

वरुणस्यायं पाशोऽपीत्यर्थः । पाशफणिनोः स्वरूपसाम्यमेवंव्यवहारे हेतुः । ननु 'अमी च कथमादित्याः (श्लो. २३)इत्यनेन श्लोकेन द्वादशादित्यावस्थाया वक्ष्यमाणत्वादिन्द्रावरुणयोश्च द्वादशादित्येष्वेवान्तर्भावात् कथं पृथग् वर्णनम् । मैवम् । अधिकरभेदनिमित्ताद् विग्रहभेदात् पृथग् व्यवहारोपपत्तेः । अत्र पाशः फणिदैन्यसदृशं दैन्यमाश्रित इति निदर्शना ॥ २० ॥

**कुबेरस्य मनःशल्यं शंसतीव पराभवम् ।**
**अपविद्धगदो बाहुर्भग्नशाख इव द्रुमः ॥ २१ ॥**

(प्रकाशिका)

**कुबेरस्येति । शंसतीवेत्युत्प्रेक्षया स्फुटत्वं द्योत्यते । मनःशल्यं पराभवमिति रूपकम् ॥ २१ ॥**

(विवरणम्)

कुबेरावस्थामाह—

कुबेरस्येति । कुबेरस्य अपविद्धगदः बाहुः पराभवं शंसति इव । कुबेरस्य वैश्रवणस्य । अपविद्धगदः अपविद्धा त्यक्ता । यथा रघुवंशे 'अपविद्धशुचाविव' इति । अपविद्धा शत्रुप्रहारसामर्थ्याभावेन निरुपयोगत्वात् त्यक्ता गदा येन सः बाहुः हस्तः पराभवं परिभवं शंसति कथयतीव । वैश्रवणस्य गदाशून्यो हस्त एव शत्रुपरिभवं कथयतीवेत्युत्प्रेक्षा । कथनोत्प्रेक्षया च पराभवस्य स्फुटत्वं द्योत्यते । कथितं हि स्फुटतरमवगम्यते । तादृशं बाहुमुपमिनोति—भग्नशाखः द्रुमः इव इति । भग्नाः भङ्गं प्रापिताः शाखा यस्य तादृशो द्रुमः वृक्ष इव । पराभवस्यात्यन्तासह्यत्वं द्योतयन् पराभवं विशिनष्टि—मनश्शल्यमिति । मनसः शल्यं शल्यवदत्यन्तदुस्सहमित्यर्थः । रूपकं चेदम् । अत्रोत्प्रेक्षोपमारूपकाणां संसृष्टिः ॥ २१ ॥

---

१. 'नालङ्कारः ॥' घ. पाठः.

यमोऽपि विलिखन् भूमिं दण्डेनास्तमितत्विषा ।
कुरुतेऽस्मिन्नमोघेऽपि निर्वाणालातलाघवम् ॥ २२ ॥

(प्रकाशिका)

यमोऽपीति । भूविलेखनं विषादस्यानुभावः । लाघवमबहुमानम् । अयं तु श्लोकः 'प्रशमादर्चिषाम्' (श्लो. १९) इत्यस्यानन्तरं पठनीयः ॥ २२ ॥

(विवरणम्)

यमावस्थामाह—

यमोऽपीति । यमः अपि दण्डेन भूमिं विलिखन् अमोघे अपि अस्मिन् निर्वाणालातलाघवं कुरुते । यमयति नियमयत्यसत इति यमः । असतां नियन्तायमन्तकोऽपीत्यपिशब्दार्थः । अनेनास्य पूर्वोक्तदिक्पालत्रयव्यतिरेक उक्तः । तथाभूतोऽयमप्येतादृशो जातः, किमुतान्य इति भावः । यमस्यैतादृशं विशेषं प्रतिपादयितुमेव महेन्द्रवृत्तान्तवर्णनानन्तरं क्रममतिक्रम्य वरुणकुबेरयोरवस्था प्रतिपादिता । अरुणाचलनाथादयः पुनः—अयं तु श्लोकः 'प्रशमादर्चिषाम्' (श्लो. १९) इत्यस्यानन्तरं पठनीय इत्येवोक्तवन्तः । दण्डेन स्मरणमात्रेणाप्यसतां भयङ्करेणेत्यर्थः । भूमिं विलिखन् । विषादवन्तो हि दण्डादिना भूमिविलेखनं कुर्वन्तीति विषादस्यानुभावोऽयम् । अमोघे (मोघो) निष्फलो न भवतीत्यमोघः तस्मिन्नपि, सफलप्रहारेऽपीत्यर्थः । अपिशब्दोऽस्य तादृशावस्थाया अयोग्यत्वं सूचयति । अस्मिन् दण्डे निर्वाणालातलाघवं निर्वाणे प्रशान्तानले अलाते उल्कायां यल्लाघवम् अबहुमानः, तत् करोति । यतोऽयं तादृशमपि दण्डमित्थं भूविलेखनादावुपयोजितवान्, ततोऽस्य तस्मिन्ननादरः स्फुट एव । अनादरश्च शत्रुप्रहारसामर्थ्याभावकृत इत्यवसेयम् । दण्डस्यापि निस्तेजस्त्वप्राप्तिर्दर्शनमात्रेणैवावसेयेत्याह—अस्तमितत्विषेति ।

---

१. इति भावः । अ' ग. पाठः.

अस्तमिता विनष्टा त्विट् शोभा यस्य तत्तथा। एतच्च दण्डविशेषणं निर्वाणालातसाम्यसिद्ध्यर्थम्। अत्रेन्द्राद्यायुधानां नष्टप्रभावत्वप्रतिपादनेन तदधिष्ठात्र्या देवताया अपि भयाकुलत्वं दर्शितम् ॥ २२ ॥

**अमी च कथमादित्याः प्रतापक्षयशीतलाः।**
**चित्रन्यस्ता इव गताः प्रकामालोकनीयताम् ॥ २३ ॥**

(प्रकाशिका)

**अमी** इति। कथमिति विस्मये। प्रकामं यथेच्छम् ॥ २३ ॥

(विवरणम्)

दिक्पालावस्थावर्णनानन्तरमवशिष्टेषु देवेषु प्रधानभूतानामादित्यानामवस्थां प्रस्तौति—

**अमी** इति। अमी आदित्याः च प्रकामालोकनीयतां गताः कथम्। अमी पुरतो दृश्यमानाः। हस्तनिर्देशपूर्वकोऽयं व्यवहारः। आदित्याः द्वादशादित्याः। चकारोऽयमपिशब्दार्थे। ये पूर्वं प्रभया दुर्निरीक्षाः, तेऽपीत्यर्थः। प्रकामालोकनीयतां प्रकामं यथेच्छम् आलोकनीया द्रष्टुं शक्या इति प्रकामालोकनीयाः, तेषां भावस्तत्ता, तां गताः प्राप्ताः कथम्। कथंशब्दो विस्मये। तादृशा आदित्या अप्येवंभूताः, अत्यद्भुतमेतदित्यर्थः। उत्प्रेक्षते — चित्रन्यस्ता इव इति। चित्रेषु न्यस्ताः लिखिता इव। न हि चित्रन्यस्ता आदित्या दुरालोका भवन्ति। प्रकामालोकनीयत्वप्राप्तौ हेतुमाह — प्रतापक्षयशीतला इति। प्रतापस्य आतपस्य। 'प्रतापौ पौरुषातपौ' इति यादवः। क्षयेण शीतलाः शीताः। एतच्च पराभवहेतुकस्य दैन्यस्यानुभावः ॥ २३ ॥

**पर्याकुलत्वान्मरुतां वेगभङ्गोऽनुमीयते।**
**अम्भसामोघसंरोधः प्रतीपगमनादिव ॥ २४ ॥**

---

१. 'ता न' घ. पाठः. २. 'ति' मुद्रितकोशपाठः. ३. 'ष्ट' घ. पाठः. ४. 'ताः। न' घ. पाठः.

(प्रकाशिका)

पर्याकुलत्वादिति । मरुतां वायूनाम् । ते च स्मृत्युक्ता अष्टौ—

"गगनः स्पर्शनो वायुरनिलो मारुतस्तथा ।
प्राणः प्राणेशजीवौ च मरुतोऽष्टौ प्रकीर्तिताः ॥"

इति । अथवा तन्त्रान्तरोक्तानां वायूनामेकोनपञ्चाशतो ग्रहणम्, अत्र लिङ्गं वेगभङ्गः, न तु मरुद्गणानां, तदसम्भवात् ॥ २४ ॥

(विवरणम्)

वायूनामवस्थामाह—

पर्याकुलत्वादिति । मरुतां पर्याकुलत्वाद् वेगभङ्गः अनुमीयते । मरुतां

"गगनः स्पर्शनो वायुरनिलो मारुतस्तथा ।
प्राणः प्राणेशजीवौ च मरुतोऽष्टौ प्रकीर्तिताः ॥"

इति स्मृत्युक्तानामष्टानां वायूनां, न तु मरुद्गणानां, तेषां वेगभङ्गानुपपत्तेः । पर्याकुलत्वाद् व्याकुलत्वाद्, अयथापूर्वसंचाराद्धेतोरित्यर्थः । वेगस्य भङ्गो वेगभङ्गः । अनुमीयते दृश्यमानेन पर्याकुलत्वेन लिङ्गेन वायूनामपि वेगो यत्रकुत्रापि भग्नो जात इत्यनुमीयत इत्यर्थः । अत्रोपमामाह—अम्भसाम् ओघसंरोधः प्रतीपगमनाद् इव इति । अम्भसां जलानाम् ओघसंरोधः ओघस्य प्रवाहस्य संरोधः सम्यग्रोधः समुद्रवर्धनादिना विच्छेदः प्रतीपगमनात् प्रतीपं प्रतिकूलं यथा भवति तथा गमनादिव । यथा नदीनां वेगभङ्गः सुखानुमेय इति भावः ॥ २४ ॥

**आवर्जितजटामौलिविलम्बिशशिकोटयः ।**
**रुद्राणामपि मूर्धानः क्षताहङ्कारशंसिनः ॥ २५ ॥**

---

१. 'म' ङ. पाठः. २. 'तहुङ्का' मुद्रितकोशपाठः.

(प्रकाशिका)

आवर्जितेति[1]। आवर्जिते जटामये मौलौ केशबन्धे विशेषेण लम्बिन्यः शशिकोटयो येषाम् । अहङ्कारोऽभिमानित्वम् । अहङ्कारस्याधिदैवतं शिवः । स एवैकादशात्मा रुद्रः । तत इयमुक्तिः ॥ २५ ॥

(विवरणम्)

रुद्राणामवस्थामाह—

आवर्जितेति । रुद्राणां मूर्धानः अपि क्षताहङ्कारशंसिनः । रुद्राणामेकादशरुद्राणां । मूर्धानः शिरांसि क्षताहङ्कारशंसिनः क्षतं भग्नम् अहङ्कारम् अभिमानित्वं शंसितुं शीलमेषामिति तथा । भवन्तीति शेषः । अहङ्कारस्याधिदैवतं शिव इति पुराणप्रसिद्धिः । एकादशात्मा रुद्रोऽपि स एव । ततश्च अहङ्काराधिदैवतानामप्यहङ्कारक्षतिरिति विरोधोऽपिशब्देनोच्यते । मूर्ध्नामहङ्कारक्षतिकथनप्रकारं विशेषणद्वारेणाह — आवर्जितजटामौलिविलम्बिशशिकोटय इति । आवर्जितेषु विषादभरानतशिरस्कतया शिरसा सहावनमितेषु जटारूपेषु मौलिषु केशबन्धेषु । 'चूडा किरीटं केशाश्च संयता मौलयस्त्रय' इति सिंहः[2] । विलम्बिन्यः लम्बनशीलाः शशिकोटयश्चन्द्रकला येषु ते तथा । नम्रशिरस्त्वं विषादस्यानुभावः । शिरोनमने शिरोलङ्कार(स्वस्त ? स्रंस)स्तु स्वभावसिद्ध इति स्वभावोक्तिः ॥ २५ ॥

लब्धप्रतिष्ठाः प्रथमं न[3] खलु स्थ बलोत्तरैः ।
अपवादैरिवोत्सर्गाः कृतव्यावृत्तयः परैः ॥ २६ ॥

(प्रकाशिका)

इत्थं निरूपितस्य वैकृतस्य हेतुं स्वयमेवाभ्यूहति[4]—

लब्धेति । प्रथमं लब्धप्रतिष्ठाः प्राप्तस्वपदस्थितयः । न खलु स्थ ।

---

१. 'ति । ज' क. ख. ग. घ. पाठः. २. 'त्वमरः ।' घ. पाठः. ३. 'यूयं किं बलवत्तरैः' मुद्रितकोशपाठः. ४. 'हयति' ङ. पाठः.

खलुर्जिज्ञासायाम् । एतद् विशेषतो ज्ञातुमिच्छामीत्यर्थः । न स्थ न भवथ । काक्वा भवथैवेत्यर्थः । 'मथ्नामि कौरवशतमि'त्यादिवत् । कृतव्यावृत्तयः स्वपदाच्च्याविताः । अत्र हेतुः—बलोत्तरैरिति । अपवादानां बलवत्तरत्वं 'सावकाशनिरवकाशयोर्निरवकाशो बलीयानि'ति न्यायात् । परैः शत्रुभिः ॥ २६ ॥

(विवरणम्)

इत्थं प्रतिपादितानां मुखवैवर्ण्यादीनां कारणं स्वयमेवाभ्युह्य कथयति—

लब्धेति । यूयं परैः कृतव्यावृत्तयः न खलु स्थ । परैः शत्रुभिः कृतव्यावृत्तयः कृता विहिता व्यावृत्तिः स्वपदच्युतिर्येषां तथाविधा न खलु । खलुशब्दो जिज्ञासायाम् । स्थ भवथ । अत्र काक्वा भवथैवेत्यर्थः । 'मथ्नामि कौरवशतं समरे न कोपाद्' इत्यादिवत् । भवन्तः शत्रुभिः स्वपदात् प्रच्याविता एव । तद्विशेषविषया मे जिज्ञासेति भावः । 'निषेधवाक्यालङ्कारजिज्ञासानुनये खलु' इत्यमरः । स्वपदात् प्रच्यावनमुपमया स्फुटयति—अपवादैः उत्सर्गाः इव इति । अपवादैर्विशेषविधिभिः उत्सर्गाः सामान्यविधय इव । यथा विशेषविधिभिः सामान्यविधयः स्वस्थानान्निरस्यन्ते, तथा यूयमपि परैरिन्द्रादिस्थानान्निरस्ता एव । के पुनस्त इत्यादयो विशेषाः कथ्यन्तामित्यर्थः । सामान्यविधीनां देवानां च साधारणं धर्ममाह—प्रथमं लब्धप्रतिष्ठा इति । प्रथमं शत्रुसमागमात् पूर्वं विशेषशास्त्रश्रवणात् पूर्वं च लब्धा प्राप्ता प्रतिष्ठा स्वपदस्थितिर्यैस्ते तथा । परेषां (विशेष)विधीनां च साधारणं धर्ममाह—बलोत्तरैरिति । बलेन शक्त्या उत्तरैः उत्कृष्टैः । इन्द्रादिभ्योऽपि बलाधिकैरित्यर्थः । विशेषविधीनां बलोत्तरत्वं तु 'सावकाशनिरवकाशयोर्निरवकाशो विधिर्बलीयानि'ति न्यायात् । सर्वे ब्राह्मणा भोजयितव्या इत्यादयः सामान्यविधयः । देवदत्तस्तु क्षीरयवागूं पाययितव्य इत्यादयो विशेषविधयः । तत्र ब्राह्मणसामान्यतः प्रथमं देवदत्तेऽपि प्राप्तं भोजयित-

१. 'रैः ।' ङ. पाठः. २. 'थ । का' घ. पाठः. ३. 'ण' घ. पाठः.

व्यत्वं पाश्चात्येन विशेषविधिना निरस्यते । तत्र यदि विशेषविधिर्दैवदत्तादपि निवर्तेत[1], तर्हि स निरवकाश एव स्यात् । न च विधेर्निरवकाशत्वं युक्तं कल्पयितुम् । सामान्यविधिस्तु ब्राह्मणान्तरेषु सावकाश एवेति युक्तं विशेषविधीनां बलोत्तरत्वम् ॥ २६ ॥

**तद् ब्रूत वत्साः! किमितः प्रार्थयध्वे[2] समागताः ।**
**मयि सृष्टिर्हि लोकानां रक्षा युष्मास्ववस्थिता ॥ २७ ॥**

(प्रकाशिका)

तदिति । तत् तस्माद्, यस्माद् वैकृतहेतुरेवंविधः । ब्रूत वत्साः! । किं ब्रूम इत्याह—किमित इति । यत् प्रार्थितं तद् ब्रूतेत्यर्थः । इतोऽस्मत्तः । समागताः सम्भूयागमनात् प्रार्थनयावश्यं भवितव्यमिति भावः । ननु लोकस्थितिभङ्गे मति लोकगुरोस्तव लोकपालानामस्माकं च समानेयं प्रार्थनेत्याह—मयीति । तस्माद् रक्षाप्रार्थना युष्माकमेवेत्यभिप्रायः ॥ २७ ॥

(विवरणम्)

अथ तस्मिन् विषये स्वकर्तव्यांशं पृच्छन् वचनमुपसंहरति—

तदिति । तद् वत्साः! समागता यूयम् इतः किं प्रार्थयध्वे ब्रूत । तद् भवतामिदं मुखवैवर्ण्यादिकं परपरिभूतत्वं यतो वदति, तस्मादित्यर्थः । वत्साः! पुत्राः! । अनेनानुकम्पातिशय उक्तः । समागताः सम्भूयागताः । अनेन प्रार्थनाया अवश्यम्भावः सूचितः । (इतः) मत्सकाशात् किं वस्तु प्रार्थयध्वे । 'अर्थ याच्ञायाम्' इति धातुः । ब्रूत व्यक्तं वदत । 'ब्रूञ् व्यक्तायां वाचि' इति धातुः । को भवतां पराभवकर्तेति शेषः कथ्यतामित्यर्थः । किं प्रार्थयध्वे इत्यनेन प्रश्नेनैव ब्रूतेत्येतद् गतार्थमपि पुनर्वचनं त्वराविशेषं द्योतयति । मत्सकाशाद् यदपेक्षितं, तत् त्वरितं ब्रूत, नात्र शङ्का कर्तव्येत्यर्थः । ननु लोकरक्षापरिक्षये जायमाने लोकगुरोस्तव लोकपालानामस्माकं च समा-

१. 'तैत, त' घ. पाठः. २. 'ध्वं' मुद्रितकोशपाठः.

नमेव व्यसनम् । तस्मात् किमर्थं प्रार्थयध्व इत्युच्यत इत्यत्राह — मयि लोकानां सृष्टिः अवस्थिता, रक्षा युष्मासु हि इति । रजोगुणमवलम्ब्याव-स्थिते मयि लोकानां सृष्टिरवस्थिता । रक्षा तु लोकपालनाधिकृतेषु युष्मास्वेव । हिशब्दः प्रसिद्धौ । ततो लोकरक्षापरिक्षये तद्रक्षणाधिकृतानां युष्माकमेव प्रार्थना युक्तेति भावः ॥ २७॥

**ततो मन्दानिलोद्धूतकमलाकरशोभिना ।**
**गुरुं नेत्रसहस्रेण [1]चोदयामास वासवः ॥ २८ ॥**

(प्रकाशिका)

तत इति । गुरुं बृहस्पतिम् ॥ २८ ॥

(विवरणम्)

अथ प्रतिवचनप्रस्तावे वाचस्पतेरेव तद्योग्यत्वान्महेन्द्रस्य तन्नियोगप्रकारमाह—

तत इति । ततः वासवः नेत्रसहस्रेण गुरुं चोदयामास । ततः ब्रह्मणो नियोगानन्तरं वासवः इन्द्रः नेत्राणां सहस्रेण करणभूतेन गुरुं बृहस्पतिम् । 'बृहस्पतिः सुराचार्यो गीष्पतिर्धिषणो गुरुरि'ति [2]सिंहः । चोदयामास प्रेरयामास । 'चुद प्रेरण' इति धातुः । प्रतिवक्तुमिति शेषः । नेत्रसहस्रव्यापारप्रतिपादनेन नियोगप्रकारमेव वदन् नेत्रसहस्रं विशिनष्टि— मन्दानिलोद्धूतकमलाकरशोभिनेति । मन्दानिलेन मन्दवातेन उद्धूतश्चलितो यः कमलाकरः पद्माकरः तद्वत् शोभितुं शीलमस्येति तथा । गुरुविषयगौरव-द्योतकं तत्कालविशेषणं च । अत्र नेत्रसहस्ररूपोऽवयवी कमलाकरस्थानीयः । अवयवभूतानि नेत्राणि तु कमलस्थानीयानीति विभागः ॥ २८ ॥

**स [3]विनेत्रं हरेश्चक्षुर्[4]दशचक्षुश्शताधिकम् ।**
**वाचस्पतिरुवाचेदं प्राञ्जलिर्जलजासनम् ॥ २९ ॥**

१. 'नो' मुद्रितकोशपाठः. २. 'अमरः ।' घ. पाठः. ३. 'द्विनेत्रं ह', ४. 'क्षुः सहस्रनयनाधि' इति मुद्रितकोशपाठः.

(प्रकाशिका)

स इति। हरेरिन्द्रस्य चक्षुः अर्थप्रकाशकत्वादुपचारः। दश च तानि चक्षुश्शतानि चेति दशचक्षुश्शतानि, तेभ्योऽधिकं विशिष्टम्। कथं वैशिष्ट्यमित्याह—विनेतृ। विनयोपदेशकम्। 'स द्विनेत्र' इति पाठे द्वे नेत्रे यस्य धर्मदृष्टिरर्थदृष्टिश्च। अनेन भगवतो बृहस्पतेर्भगवतः शुक्राद् व्यतिरेको ध्वनितः। स हि बलियज्ञे विरोधमाचरन् भगवता विष्णुना धर्मदृष्ट्या विकलीकृतः। असौ तु दृष्टिद्वययोगाद् धर्मार्थावुभावपि समीक्ष्योक्तवानित्यर्थः। दशचक्षुश्शताधिकं तदगोचरार्थग्राहकमित्यर्थः। वाचस्पतिः अलुकि 'षष्ठ्याः पतिपुत्र—' (८.३.५३) इति सत्वम्॥ २९॥

(विवरणम्)

अथ बृहस्पतेः प्रतिवचनप्रस्तावमाह—

स इति। सः वाचस्पतिः प्राञ्जलिः जलजासनम् इदम् उवाच। सः यः एवं वासवेन नियुक्तः स इत्यर्थः। वाचस्पतिः गीष्पतिः। 'जीव आङ्गिरसो वाचस्पतिरि'त्यमरः। अलुक्। 'षष्ठ्याः पतिपुत्र—'(८.३.५३)इति सत्वम्। अनेन बृहस्पतेरुक्तिचातुर्यं दर्शितम्। तच्च नियोगहेतुः। प्राञ्जलिः प्रकृष्टोऽञ्जलिर्यस्य तथाभूतः सन्, अञ्जलिं कृत्वेत्यर्थः। जलजासनं ब्रह्माणम् उवाच उक्तवान्। न केवलमुक्तिचातुर्यं, विचारचातुर्यं चास्तीत्याह—द्विनेत्र इति। धर्मदृष्टिरर्थदृष्टिश्चेति द्वे नेत्रे यस्य स द्विनेत्रः। अनेनासुराचार्याद् भार्गवात् सुराचार्यस्यास्य व्यतिरेको ध्वन्यते। शुक्रो हि बलियज्ञे नारायणप्रार्थितपदत्रयपरिमितभूभागप्रदाने विरोधमाचरन् भगवता धर्मदृष्ट्या वियोजितः। असौ तु दृष्टिद्वयशालित्वाद् धर्मार्थावुभावपि समीक्ष्योक्तवान्। अत एव विजयार्थं सेनानीसृष्टिमात्रं प्रार्थयिष्यति 'तदिच्छामः'(श्लो.५०)इत्यादिना। अस्य महेन्द्रयोगक्षेमविधानमात्रतत्परत्वं महेन्द्रापेक्षया विज्ञानाधिक्यं चाह—हरेः दशचक्षुश्शताधिकं चक्षुरिति। हरेरिन्द्रस्य।

"यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु।
शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु॥"

इति सिंहः। दश च तानि चक्षुश्शतानि चेति तथा। तेभ्योऽधिकं विशिष्टं चक्षुरित्यर्थः। चक्षुश्शब्दोऽयमर्थ..काश(क)त्वाद् वाचस्पतौ गौणः। 'लक्ष्यमाणगुणैर्योगाद् वृत्तेरिष्टा तु गौणता' इति। चक्षुस्सहस्रागोचरार्थग्राहक इत्यर्थः॥२९॥

**एवं यदात्थ भगवन्नामृष्टं नः परैः पदम्।**
**प्रत्येकं विनियुक्तात्मा कथं न ज्ञास्यसि प्रभो!॥ ३०॥**

(प्रकाशिका)

**एवमिति।** 'लब्धप्रतिष्ठाः'(श्लो.२६)इत्यादिना परैरस्माकं पदमाक्रान्तमिति यदात्थ, तदेवं[1], सत्यमित्यर्थः। प्रत्येकं प्रतिपदार्थम्। विनियुक्तात्मा विभक्तशक्तिः। विश्वव्यापित्वात् सर्वगतं जानासीत्यर्थः॥३०॥

(विवरणम्)

वचनप्रकारमेवाह—

**एवमिति।** हे भगवन्! त्वं यद् आत्थ तद् एवम्। भगाः सन्त्यस्येति भगवान्।

"ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा॥"

हे भगवन्! ऐश्वर्यादिषड्गुणपरिपूर्ण! त्वं यद् आत्थ 'लब्धप्रतिष्ठाः प्रथमम्' (श्लो.२६)इत्यादिनास्माकं पदं परैराक्रान्तमिति यद् ब्रवीषि। 'ब्रुवः पञ्चानाम्' (३.४.८४)इत्यादिना सिपस्थलादेशो ब्रुवश्चाहादेशः। तदेवं, तत्तथेत्यर्थः। अनूदितमेवार्थं सुखग्रहणार्थमुद्दिशति — नः पदं परैः आमृष्टम् इति। नः अस्माकं पदम् इन्द्रादिस्थानं परैः शत्रुभिः। अत्र तारकासुरस्यैकत्वेऽपि तत्सहचराणां बहुत्वाद् बहुवचनम्। इन्द्रादीन् प्रायशस्तत्तत्स्थानेभ्यो निरस्य

---

१. 'वं जा' ड. पाठः.

स्वानेव दैत्यांस्तत्र तत्र नियोजितवानिति बहुवचनेन द्योत्यते । आमृष्टं परिभूतम् । भवता यदस्मद्विज्ञापनात् पूर्वमेवास्मद्वृत्तान्तसाक्षात्कारः कृतः, तदुपपन्नमेवेति वदन् पुनरपि स्तौति — प्रभो ! प्रत्येकं विनियुक्तात्मा त्वं कथं न ज्ञास्यसि इति । हे प्रभो ! सर्वलोकनियन्तः ! प्रत्येकं प्रतिपदार्थम् । सर्वेष्वपि पदार्थेष्वित्यर्थः । विनियुक्तः आत्मा येन स तथा । अनेन सर्वलोकसाक्षित्वमुक्तम् । तत एव हेतोः कथं न ज्ञास्यसि कथं न जानीयाः । लृट्प्रयोगस्तु 'कथं स लक्ष्यप्रभवो भविष्यति' 'भविष्यति प्रार्थितदुर्लभः कथम्' इत्यादिवद् द्रष्टव्यः । सर्वजनान्तर्यामितया विश्वव्यापी भवान् किं किं न लोकवृत्तं[1] जानातीति भावः ॥ ३० ॥

**त्वया[2] दत्तवरोदीर्णस्तारकाख्यो महासुरः ।**
**उपप्लवाय लोकानां धूमकेतुरिवोत्थितः ॥ ३१ ॥**

(प्रकाशिका)

तमेव स्वाधिकारोपप्लवं प्रपञ्चयति—

त्वयेति । दत्तवरत्वादुदीर्णं उद्रिक्तः । अनेन शक्त्युपचय उक्तः । महासुर इत्यसुरविजयित्वात् तस्य क्रूरत्वमुक्तम् । अत एवाह — उपप्लवायेति । धूमकेतुरुत्पातविशेषः ॥ ३१ ॥

(विवरणम्)

अथ तमेव स्वाधिकारोपप्लवं विस्तरतः प्रदर्शयिष्यन्नुपप्लवहेतुभूतं तारकासुरमेव निर्दिशति—

त्वयेति । तारकाख्यो महासुरः लोकानाम् उपप्लवाय उत्थितः । तारक इत्याख्या नाम यस्य स तथा महासुरः महान् असुरः 'आन्महतः–' (६. ३. ४६) इत्यादिनात्वम् । असुरश्रेष्ठ इत्यर्थः । असुरविजयित्वात् क्रूर-

१. 'तान्तं जा' क. पाठः. २. 'भवलब्धव' मुद्रितकोशपाठः.

स्वभाव इति भावः । धर्मविजयिनश्च लोभविजयिनश्चासुरविजयिनश्चेति त्रिविधाः खलु विजिगीषवः । यदाह कौटिल्यः — धर्मलोभासुरविजयिन इति त्रयोऽभियोक्तारः । तेषामभ्यवपत्त्या धर्मविजयी तुष्यति; तमभ्यवपद्येत । परेषामपि भयाद् भूमिद्रव्यापहरणेन लोभविजयी तुष्यति; तमर्थेनाभ्यवपद्येत । भूमिद्रव्यपुत्रदारप्राणहरणेनासुरविजयी तुष्यति ; तं भूमिद्रव्याभ्यामुपगृह्याग्राह्यः प्रतिकुर्वीत (१२. १. १६२) इति । अत एव वक्ष्यति—

"इत्थमाराध्यमानोऽपि क्लिश्नाति भुवनत्रयम् ।
शाम्येत् प्रत्यपकारेण नोपकारेण दुर्जनः ॥" (श्लो. ३९)

इति । लोकानां चतुर्दशभुवनानाम् उपप्लवायात्यन्तविनाशाय । असुरविजयित्वादिति भावः । उत्थितः उदितः, भवतीति शेषः । ननु लोकोत्तरबलैर्भवद्भिरेव स हन्यतामित्यत्राह — त्वया दत्तवरोदीर्ण इति । त्वया विश्वगुरुणा भवतैव, न तु येनकेनचिदिति भावः । दत्तवरोदीर्णः दत्तो वरो यस्मै स दत्तवरः, अत एव उदीर्ण उद्रिक्तः । त्वद्वरादस्माकमवध्यतां गत इत्यर्थः । एतस्यैव चतुर्दशलोकविनाशहेतुत्वमुपमया स्फुटयति — धूमकेतुः इव इति । धूमाकारः केतुर्धूमकेतुः उत्पातविशेषः । 'अग्न्युत्पातौ धूमकेतू' इत्यमरः । धूमकेतोरुदयस्यात्यन्तिकविनाश(हेतु)त्वमुक्तं गार्ग्यसंहितायाम्—

"उत्तिष्ठति यदा भीमो धूमकेतुर्नभस्तले ।
तदा विनश्यति क्षिप्रं जगदेतच्चराचरम् ॥"

इति ॥ ३१ ॥

**पुरे तावन्तमेवास्य तनोति रविरातपम् ।**
**दीर्घिकाकमलोन्मेषो यावन्मात्रेण सिध्यति ॥ ३२ ॥**

---

१. 'साम्यते' मुद्रितकोशपाठः.

(प्रकाशिका)

अथ तद्विषये यथाशक्त्यनुवृत्तिमाह सप्तभिः श्लोकैः—

**पुर इति। यावन्मात्रेण, मात्रशब्दोऽवधारणे। यावतैवेत्यर्थः ॥३२॥**

(विवरणम्)

अथ विषयीभूतेषु तद्विषयेषूपायान्तरेषु स्वशक्त्यनुरूपां समाश्रयवृत्तिं दर्शयति सप्तभिः श्लोकैः। तत्रादौ रवेरनुवृत्तिमाह—

पुर इति। रविः अस्य पुरे तावन्तम् एव आतपं करोति। रविरादित्यः अस्य तारकासुरस्य पुरे राजधान्यां तावन्तं तत्परिमाणम्। 'यत्तदेतेभ्यः परिमाणे वतुप्' (५. २. ३९)। आतपं प्रकाशम्। 'प्रकाशो द्योत आतप' इत्यमरः। करोति विदधाति। किंपरिमाणमित्यत्राह— यावन्मात्रेण दीर्घिकाकमलोन्मेषः सिध्यति इति। यावन्मात्रेण, मात्रशब्दोऽवधारणे। 'मात्रं कात्स्नर्येऽवधारण' इत्यमरः। यावतैवेत्यर्थः। दीर्घिकाकमलोन्मेषः दीर्घिकासु क्रीडावापीषु। 'वापी तु दीर्घिके'त्यमरः। तासु यानि कमलानि पद्मानि तेषामुन्मेषो विकासः सिध्यति सिध्येत्। यावतैव निजातपेन वापीकमलविकाससिद्धिः, रविस्तत्पुरे तावन्मात्रमेवातपं करोति, न न्यूनमधिकं वा। न्यूनत्वे कमलोन्मेषाभावेनापराधप्रसङ्गाद्, अधिकत्वे तु तदवरोधवधूमुखारविन्दपरिम्लानताविधानेनात्यन्तमपराधप्रसङ्गाच्चेति भावः ॥ ३२ ॥

**सर्वाभिः सर्वदा चन्द्रस्तं कलाभिर्निषेवते।**
**नादत्ते केवलां रेखां[1] हरचूडामणीकृताम् ॥ ३३ ॥**

(प्रकाशिका)

**सर्वाभिरिति। सर्वदा अपरपक्षेऽपि। केवलामेकाम् ॥ ३३ ॥**

(विवरणम्)

चन्द्रस्यानुवृत्तिमाह—

सर्वाभिरिति। चन्द्रः सर्वदा सर्वाभिः कलाभिः तं निषेवते। चन्द्रः 'चदि आह्लादने' इति धातुः। इदमेव तस्य सर्वदा निषेवणनिर्बन्धहेतुः,

---

१. 'ले' मुद्रितकोशपाठः.

"गुणानामेव दौरात्म्याद् धुरि धुर्यो नियुज्यते ।
असञ्जातकिणस्कन्धः सुखं स्वपिति गौर्गडी ॥"

इति न्यायादिति भावः । सर्वदा अपरपक्षेऽपि सर्वाभिः, न तु कृष्णप्रतिपदादिषु न्यूनाभिः । कलाभिः 'कला तु षोडशो भाग' इत्यमरः । उपलक्षणतृतीया चेयम् । निषेवते नितरां सेवते । चन्द्रोऽयं सकलकलापरिपूर्णः सन् सर्वदा तमेव निषेवत इत्यर्थः । ननु हरजटाकोटिघटिता चन्द्रस्यैका कला । अतः कथं सर्वाभिरित्युक्तं, तत्राह—हरचूडामणीकृतां केवलां रेखां न आदत्ते इति । हरेण परमेश्वरेण चूडामणीकृतां शिरोलङ्कारतां प्रापितां केवलामेकां रेखां कलां, रेखाशब्देनात्यल्पत्वमुक्तम् । इदमसुराधिपतेस्तदुपादाननिर्बन्धाभावे हेतुः । नादत्ते न स्वीकरोति । किमनया ममात्यल्पया रेखयेति तदुपेक्षामात्रेण चन्द्रः परमेश्वरपराधीनां रेखां नादत्त इत्यर्थः ॥ ३३ ॥

**व्यावृत्तगतिरुद्याने कुसुमस्तेयसाहसात्[1] ।**
**न वाति वायुस्तत्पार्श्वे तालवृन्तानिलाधिकम् ॥ ३४ ॥**

(प्रकाशिका)

व्यावृत्तेति । व्यावृत्ता निवृत्ता गतिर्यस्य । उद्याने आक्रीडे । कुसुमस्तेयसाहसात् कुसुमापहारदण्डमाशङ्क्येत्यर्थः ॥ ३४ ॥

(विवरणम्)

पवनस्यानुवृत्तिमाह—

व्यावृत्तेति । वायुः तत्पार्श्वे तालवृन्तानिलाधिकं न वाति । वायुः 'वा गतिगन्धनयोरि'ति धातुः । सञ्चारशीलोऽपीत्यर्थः । तत्पार्श्वे तस्य तारकासुरस्य पार्श्वे समीपे तालवृन्तानिलाधिकमिति वानक्रियाविशेषणम् ।

---

१. 'लापू' घ. पाठः. २. 'ध्व' मुद्रितकोशपाठः.

तालवृन्तस्य व्यजनस्यानिलो वायुस्तालवृन्तानिलः। व्यजने वीज्यमाने जायमानोऽनिल इत्यर्थः। तस्मादधिकं यथा भवति तथा न वाति औचित्यानुसारेण तालवृन्तानिलवद् वाति चेत्यर्थः। किमर्थं ततोऽधिकं न वातीत्यत्राह—उद्यानकुसुमस्तेयसाहसाद् व्यावृत्तगतिरिति। उद्यानकुसुमस्तेयसाहसादिति ल्यब्लोपे पञ्चमी। उद्यानकुसुमस्तेयसाहसमाशङ्क्येत्यर्थः। उद्याने आक्रीडे 'पुमानाक्रीड उद्यानमि'त्यमरः। यानि कुसुमानि पुष्पाणि तेषां स्तेयम् अपहारः, तस्माद्धेतोर्यः साहसः दण्डः, 'दण्डो दमः साहसोऽस्त्री' इति वैजयन्ती। तम् आशङ्क्य व्यावृत्तगतिः निवृत्तस्वैरसञ्चारः। उद्यानकुसुमस्तेयरूपादनालोचितकर्मणः सकाशाद् व्यावृत्तगतिरिति केचिद् व्याचक्षते। तत्पक्षे गतिशब्दो निरुपयोगः स्याद्, उद्यानकुसुमस्तेयसाहसाद् व्यावृत्त इत्यनेनैव चरितार्थत्वात्॥ ३४॥

**पर्यायसेवामुत्सृज्य पुष्पसम्भारतत्पराः।**
**उद्यानपालसामान्यमृतवस्तमुपासते॥ ३५॥**

(प्रकाशिका)

**पर्यायेति। सम्भारः सम्पादनम्। उद्यानपालैः सामान्यं यथा भवति॥ ३५॥**

(विवरणम्)

ऋतूनामनुवृत्तिमाह—

**पर्यायेति**। ऋतवः पर्यायसेवाम् उत्सृज्य तम् उद्यानपालसामान्यम् उपासते। ऋतवः वसन्तादयः।

"वसन्तश्च तथा ग्रीष्मः प्रावृट् च शरदेव च।
हेमन्तः शिशिरश्चैव षडेत ऋतवः स्मृताः॥"

इति। पर्यायसेवां पर्यायेण क्रमेण सेवा पर्यायसेवा, ताम्। उत्सृज्य

त्यक्त्वा। सर्वत्र हि वसन्तादयः क्रमेण प्रवर्तन्ते, तद्गृहे तु युगपदेवेति भावः। तं तारकम्। उद्यानपालसामान्यमित्युपासनक्रियाविशेषणम्। उद्यानमाक्रीडं पालयन्तीत्युद्यानपालाः, तैः सामान्यं साधारणं यथा भवति तथा। समानशब्दात् चतुर्वर्णादीनां स्वार्थ उपसङ्ख्यानम्' (वा. ५.१.१२४) इति स्वार्थे ष्यञि कृते सामान्यशब्दसिद्धिः। उपासते सेवन्ते। ननु कथमृतूनामुद्यानपालसाधारण्यमित्याशङ्क्य साधारणं धर्ममाह—पुष्पसम्भारतत्परा इति। पुष्पाणां सर्वर्तुसम्भवानां चम्पकादीनां सम्भारे सम्पादने तत्पराः सावधानाः। शीतोष्णादिकं स्वगुणमपहायाक्रीडपालकवत् स्वस्वकुसुमसम्पादनमात्रपरा वसन्तादयः कुसुमान्तरमविनाशयन्तो युगपदेव तमाराधयन्तीत्यर्थः। यथोद्यानपालकानां पुष्पसामग्र्या अन्यथाभावे दण्डः, तथा वसन्तादीनामप्यस्तीति भावः॥ ३५॥

**तस्योपायनयोग्यानि रत्नानि सरितां पतिः।**
**कथमप्यम्भसामन्तरानिष्पत्तेः प्रतीक्षते॥ ३६॥**

(प्रकाशिका)

तस्येति। निष्पत्तेः उपायनयोग्यतावस्थायाः। रत्नेषु यानि समग्रगुणत्वात् तदुपायनयोग्यानि अम्भसि पच्यमानानि कालपरिणामापेक्षित्वाद् अनिष्पन्नानि रत्नानि, तेषां निष्पत्तिं समुद्रस्तत्सेवात्वरया कथञ्चिद् धैर्येण प्रतिपालयतीत्यर्थः॥ ३६॥

(विवरणम्)

वरुणस्यानुवृत्तिमाह—

तस्येति। सरितां पतिः तस्य उपायनयोग्यानि रत्नानि अम्भसाम् अन्तर्निष्पत्तेः आ कथमपि प्रतीक्षते। सरितां पतिः समुद्रः तस्य तारकासुरस्य उपायनयोग्यानि उपायने उपचारार्थपदार्थप्रदाने योग्यानि उचि-

१. 'कासुरम्' घ. पाठः.

तानि रत्नानि मौक्तिकादीनि अम्भसामन्तः स्वजलान्तर्भागे निष्पत्तेः आ उत्पत्तिपर्यन्तम् । मर्यादायामाङ् । उपायनयोग्यताप्राप्तिपर्यन्तमित्यर्थः । कथमपि धैर्यमवलम्ब्येति भावः । प्रतीक्षते प्रतिपालयति । समग्रगुणानामेव रत्नानां तदुपायनयोग्यत्वात् तदितरप्रदाने दण्डमाशङ्क्य स्वजलान्तर्भागे पच्यमानानां रत्नानां कालवशादेव परिपाकोपपत्तेरुपायनयोग्यताप्राप्तिपर्यन्तं तत्सेवायाः कालविलम्बमप्याशङ्कमानो यथाकथञ्चित् प्रतीक्षते । शुक्तिकायां पतितो जलबिन्दुः षण्मासोत्तरकालमुद्गीर्णो हि प्रशस्तं मौक्तिकं भवति । यदाह राजशेखरः—मौक्तिकानां दत्तषाण्मासिकानामिति । एवं रत्नान्तरेष्वपि तदुचितकालप्राप्तेरावश्यकत्वात् प्रतीक्षणोपपत्तिः । योग्यताप्राप्त्यनन्तरं तु झटिति तस्मै समर्पयत्येवेति भावः ॥ ३६ ॥

**ज्वलन्मणिशिखाश्चैनं वासुकिप्रमुखा निशि ।**
**स्थिरप्रदीपतामेत्य भुजङ्गाः पर्युपासते ॥ ३७ ॥**

(प्रकाशिका)

**ज्वलदिति । ज्वलन्तो मणय एव शिखा येषाम् । स्थिराः वाय्वादिभिरनिर्वापणीयाः प्रदीपाः दीपभाजनवर्त्यादिसमष्टयः, अथवा स्थिरप्रदीपाः तत्र तत्राविचलत्वेन स्थापिता गृहप्रदीपा दीपभाजनानि ॥ ३७ ॥**

(विवरणम्)

अथ भूलोकवासिनां क्षुद्रत्वात तदनुवृत्तिकथनमतिलङ्घ्य पातालवासिनां नागानामनुवृत्तिमाह—

ज्वलदिति । वासुकिप्रमुखाः भुजङ्गाः निशि स्थिरप्रदीपताम् एत्य एनं पर्युपासते । वासुकिप्रमुखाः वासुकिः प्रमुखः आदिर्येषां ते तथा, वासुकिप्रभृतय इत्यर्थः । भुजङ्गाः सर्पाः । न केवलं स्वर्गवासिनो वयं, किन्तु पातालवासिनो विषकटुका भुजङ्गाश्चेति चशब्दार्थः । निशि रात्रौ । अनेन प्रदी-

पर्योग्यकालो निर्णीतः। स्थिरप्रदीपताम्। स्थिराः, अनेन तेषां तैलवर्त्यादिनिरपेक्षत्वेन तद्विनाशनिमित्ताभावात् पवनादिभिरनिर्वापणीयत्वाच्च प्रदीपान्तरेभ्यो व्यतिरेक उक्तः। प्रदीपाः दीपभाजनवर्तिज्वलनानां समष्टयः। स्थिराश्च ते प्रदीपाश्चेति स्थिरप्रदीपाः, तेषां भावस्तत्ता, तामेत्य। अथवा दीपयोग्येषु तेषु तेषु स्थानेषु निश्चलतया स्थापिताः प्रदीपाः स्थिरप्रदीपाः, प्रदीपशब्दस्य प्रदीपभाजनमर्थः। एनं तारकं पर्युपासते परितः समन्तात् सेवन्ते। भुजङ्गानां प्रदीपत्वप्राप्तौ हेतुमाह—ज्वलन्मणिशिखा इति। ज्वलन्तो मणय एव शिखा ज्वाला येषां ते तथा। भुजङ्गाः समुत्क्षिप्तफणास्तेषु तेषु प्रदेशेष्ववस्थाय निजफणामणिभिस्तिमिरमपहरन्तस्तमेव सेवन्त इत्यर्थः॥ ३७॥

**तत्कृतानुग्रहापेक्षी तं मुहुर्दूतहारितैः।**
**अनुकूलयतीन्द्रोऽपि कल्पद्रुमविभूषणैः॥ ३८॥**

(प्रकाशिका)

इत्थं भूलोकवासिनः स्वल्पबलानविगणय्य स्वर्गपातालवासिनां तारकं प्रति दण्डोपनतवृत्तमुक्त्वा त्रैलोक्याधिपतेरिन्द्रस्य वृत्तं विशेषत आह—

तत्कृतेति। अयमर्थः—उभयोरपि त्रैलोक्याधिपतित्वेन मत्सरस्य संश्रयवृत्तावपि दुरपाकरत्वाद् विशेषतस्तस्यासुरविजयित्वात् तत्सन्निकर्षतो बिभ्यद् दूरस्थ एवेन्द्रस्तदनुग्रहमाकाङ्क्षन् दूतमुखेन प्रापितैः कल्पद्रुमजैर्भूषणैस्तमनुवर्तत इति। अत्र कौटिल्यः—भूमिद्रव्यपुत्रदारप्राणहरणेनासुरविजयी तुष्यति। तं भूमिद्रव्याभ्यामुपगृह्याग्राह्यः प्रतिकुर्वीत। (१२. १. १६२) इति॥ ३८॥

(विवरणम्)

इत्थं त्रैलोक्यवासिनां तारकं प्रति दण्डोपनतवृत्तं प्रतिपाद्य त्रैलोक्याधिपतेरिन्द्रस्य वृत्तं[1] सविशेषमाह—

तत्कृतेति। इन्द्रः अपि दूतहारितैः कल्पद्रुमविभूषणैः तं मुहुः अनु-

---

१. 'तिं' क. ख. ग. घ. पाठः.

कूलयति । न परं त्रैलोक्यवासिनः, अपि तु तत्पतिरिन्द्रोऽपीत्यपिशब्दार्थः । दूतहारितैः आत्मनो दूतैः प्रयोज्यकर्तृभिः हारितैः असुरसमीपं प्रापितैः कल्पद्रुमविभूषणैः कल्पद्रुमोत्पन्नैर्विचित्रैराभरणैः तं तारकम् । मुहुः प्रतिक्षणम् अनुकूलयति आत्मानुकूलं करोति । त्वया मयि प्रसादः क्रियतामिति दूतमुखेन वदन् तदुचितान्याभरणानि च प्रनिपादयन् प्रतिक्षणं तं प्रसादयतीति यावत् । किमर्थमेवं करोतीत्यत्राह — तत्कृतानुग्रहापेक्षी इति । तत्कृतमसुरकृतमनुग्रहमपेक्षितुं शीलमस्येति तथा । अयमभिप्रायः — इन्द्रस्त्रैलोक्याधिपतित्वाभिमानिनमात्मानं प्रति समत्सरस्य विशेषतश्चासुरविजयिनस्तारकासुरस्य संश्रयवृत्त्याप्यानुकूल्यकरणमशक्यमिति निश्चिन्वानः ग्रहणबन्धनादिभयात् सन्निधिं परिहृत्य दूरावस्थित एव तदनुग्रहमाकाङ्क्षमाणः प्रतिक्षणं दूतजनप्रापितैः कल्पद्रुमविभूषणैः तमनुवर्तते । 'तं भूमिद्रव्याभ्यामुपगृह्याग्राह्यः प्रतिकुर्वीत' (१२. १. १६२) इति कौटिल्योक्तप्रकारोऽनेन दर्शित इति वेदितव्यम् ॥ ३८ ॥

**इत्थमाराध्यमानोऽपि क्लिश्नाति भुवनत्रयम् ।**
**शाम्येत् प्रत्यपकारेण नोपकारेण दुर्जनः ॥ ३९ ॥**

(प्रकाशिका)

इत्थमुपवर्णितायाः संश्रयवृत्तेर्वैफल्यमाह—

**इत्थमिति । क्लिश्नाति बाधते । विग्रहमेवास्मास्वाचरतीत्यर्थः । शाम्येत् सन्धिं कुर्यात् । ननु संश्रये प्रकृते सन्धिः किं निषिध्यते । न । द्वैगुण्यपक्षे सन्धिरेव संश्रयोऽपि । अत्र नोपकारेण शाम्येदित्येतावता विरोधपरिहारे सत्यपि प्रत्यपकारेण शाम्येदिति वचनं तन्नियमप्रतीत्यर्थम् ॥ ३९ ॥**

---

१. 'ता' क. ख. पाठः. २. 'व्यः' घ. पाठः.

(विवरणम्)

इत्थमुपवर्णितायाः संश्रयवृत्तेरप्यसुरविजयिनि तस्मिन् विफलत्वमाह—

इत्थमिति। इत्थम् आराध्यमानः अपि भुवनत्रयं क्लिश्नाति। इत्थं पूर्वोक्तप्रकारेण आराध्यमानः सेव्यमानोऽपि। अपिशब्दः सेव्यमानस्य विरोधाचरणं विरुद्धमिति दर्शयति। भुवनानां त्रयं भुवनत्रयं त्रैलोक्यं क्लिश्नाति पीडयति। अस्मासु वैरमेवाचरतीत्यर्थः। ननु प्रतिक्षणमाराध्यमानस्य कथं प्रतिकूला प्रवृत्तिरितीमामाशङ्कां दुर्जनस्यायं स्वभाव इत्यर्थान्तरन्यासेन परिहरति — दुर्जनः प्रत्यपकारेण शाम्येद् उपकारेण नेति। दुष्टो जनः दुर्जनः। अपकारिणमुद्दिश्य क्रियमाणोऽपकारः प्रत्यपकारः, तेन। शाम्येत् सन्धिं कुर्यात्। उपकारस्तु दुर्जने दोषमेवावहतीत्याह—उपकारेण नेति। उपकारेण तु न शाम्येदित्यर्थः। ननु दुर्जनो नोपकारेण शाम्येदित्येतावदेवात्र वक्तव्यमिति किमर्थं प्रत्यपकारोपन्यासः। प्रत्यपकारेणैव शाम्येदिति नियमप्रतिपादनार्थमिति ब्रूमः। यदाह माघः—

"चतुर्थोपायसाध्ये तु शत्रौ सान्त्वमपक्रिया।
स्वेद्यमामज्वरं प्राज्ञः कोऽम्भसा परिषिञ्चति॥"(स. २. श्लो. ५४)

इति। अत्राराध्यमानोऽपि न शाम्यतीत्यस्य समर्थ्यस्य प्रत्यपकारेण शाम्येदित्येतत् सामान्यं वैधर्म्येण समर्थकं, शमनाभावस्यैवोक्तत्वात्॥ ३९॥

**तेनामरवधूहस्तैः सदयालूनपल्लवाः।**
**अभिज्ञाश्छिन्नपातानां[2] क्रियन्ते नन्दनद्रुमाः॥ ४०॥**

(प्रकाशिका)

तमेव विग्रहं प्रपञ्चयति सप्तभिः श्लोकैः—

---

१. 'लाचरणोपपत्ति' क. ग. घ. पाठः. २. 'श्छेदपा' मुद्रितकोशपाठः.

तेनेति । छिन्नपातानामिति कर्मणि षष्ठी । विशेषणेन तदनर्हत्वं द्योत्यते ॥ ४० ॥

(विवरणम्)

द्विभाति भुवनत्रयमिति यो विग्रह उक्तस्तमेव प्रपञ्चयति सप्तभिः श्लोकैः । तत्र विध्वंसनम् अपहरणम् उपरोध इति त्रिविधो विग्रहः । तत्र विध्वंसनमाह—

तेनेति । तेन नन्दनद्रुमाः छिन्नपातानाम् अभिज्ञाः क्रियन्ते । तेन तारकासुरेण । नन्दनद्रुमाः नन्दने नन्दनोद्याने ये द्रुमाः वृक्षाः ते । छिन्नपातानां छिन्नानां पाताः पतनानि छिन्नपाताः, अथवा छिन्नं छेदनं, भावे निष्ठा, तेन पाताः छिन्नपाताः तेषाम् अभिज्ञाः । कर्मणि चेयं षष्ठी । अभिजानन्तीत्यभिज्ञाः क्रियन्त इति कर्मणि लट् । कल्पवृक्षानसौ छित्त्वा पातयतीत्यर्थः । पूर्वं तदभिज्ञानलेशस्याप्यभावमाह — अमरवधूहस्तैः सदयालूनपल्लवा इति । अमरवधूनां स्वर्गस्त्रीणाम् । वधूहस्तस्य कोमलत्वातिशयाद् वधूपदोपादानम् । हस्तैः करैः । सदयमिति लवनक्रियाविशेषणम् । सदयं दयासहितं यथा भवति तथा आलूनाः छिन्नाः पल्लवा येषां ते तथा । अत्रामरशब्देन तेषां नन्दनद्रुमेष्वात्मीयत्वाभिमानः प्रकाश्यते । स च लवने सदयत्वमापादयति । तत्रापि वधूहस्तैरिति कोमलत्वं द्योत्यत इत्यत्यन्तदूरे छिन्नपाताभिज्ञत्वमिति भावः । अत्र कार्यभूतेन छिन्नपातज्ञापनेन कारणभूतं पातनं प्रतीयत इति कार्यद्वारेण पातनस्यैवाभिधानात् पर्यायोक्तमलङ्कारः । नात्राप्रस्तुतप्रशंसा, कार्यकारणयोरुभयोरपि वर्णनीयत्वेन प्रस्तुतत्वात् ॥ ४० ॥

**वीज्यते स हि संतप्तश्वाससाधारणानिलैः ।**
**चामरैः सुरबन्दीनां बाष्पशीकरवर्षिभिः ॥ ४१ ॥**

(प्रकाशिका)

वीज्यत इति । सन्तप्तश्वासैः साधारणः सदृशोऽनिलो येषाम् ।

---

१. 'यं य' क. ख. ग. पाठः. २. 'ताभिज्ञपदेन' घ. पाठः. ३. 'संसुप्त: श्वा' मुद्रितकोशपाठः.

अत्र हेतुर्बाष्पशीकरवर्षिभिरिति। बन्दी हठहृतमहिला। दक्षिणावर्तस्तु तत्सङ्गात इत्याह ॥ ४१ ॥

(विवरणम्)

अथ त्रिभिः श्लोकैरपहरणं प्रतिपाद्यते। तत्रादौ अत्यन्तासह्यं दारापहरणमाह—

वीज्यत इति। स हि सुरबन्दीनां चामरैः वीज्यते। सः तारकः। हिशब्दः प्रसिद्धौ। प्रसिद्धः स इत्यर्थः। वाक्यालङ्कारे वा हिशब्दः। सुरबन्दीनां सुरा देवाः तेषां बन्दीनां तारकेण बलात्कारेण हृतानां वनितानाम्। 'बन्दी परस्य वनिता हृता बद्ध्वा बलेन या' इति भोजः। चामरैः सितव्यजनैः वीज्यत इति कर्मणि लट्। वर्तमानेनाद्यापि तदवस्थत्वमुक्तम्। सुरबन्दीनां दुःखातिशयं द्योतयन् व्यजनं विशिनष्टि—सन्तप्तश्वाससाधारणानिलैरिति। सन्तप्तैः सम्यक् तप्तैः, दुःखवशादुष्णतरैरित्यर्थः, श्वासैः दीर्घश्वासैः साधारणः सदृशोऽनिलो वायुर्येषां तैः, प्रियतमवियोगादिदुःखसन्तप्तदीर्घनिःश्वासवातसदृशवातैरित्यर्थः। व्यजनानिलानामुष्णत्वे हेतुमाह — बाष्पशीकरवर्षिभिरिति। बाष्पाणां शोकाश्रूणां शीकरान् कणान् वर्षितुं शीलमेषामिति तथा। मुहुर्मुहुः कराभ्यां बाष्पपरिमार्जनात् ताभ्यां व्यजनग्रहाच्च बाष्पशीकरवर्षित्वं व्यजनानिलानामित्यवसेयम्। शोकाश्रूणामुष्णत्वमुक्तं रघुवंशे — 'शोकोष्णैः पार्थिवाश्रुभिः'(स० १२. श्लो. ४) इति। अनेन व्यजनानिलानां सुखकरत्वाभावेऽप्यनवरतं वीज्यमानत्ववचनेनासुरविजयिनस्तस्य परपीडामात्रतत्परत्वं व्यज्यते। अत्र पूर्वश्लोक इव पर्यायोक्तं, बन्दीशब्दोपादानेन हठहृतात्वस्य स्पष्टमेवोक्तत्वात्। 'गम्यस्यापि भङ्ग्यन्तरेणाभिधानं पर्यायोक्तमि'ति हि तस्य लक्षणम्। पूर्वत्र तु छिन्नपातज्ञापनकथनेन छित्त्वा पातयतीत्यर्थः प्रतीयत एवेति विशेषः ॥ ४१ ॥

---

१. 'राहू' क. घ. पाठः. २. 'न' क. पाठः.

**उत्पाट्य मेरुशृङ्गाणि क्षुण्णानि हरितां खुरैः ।**
**आक्रीडपर्वतास्तेन कल्पिताः स्वेषु वेश्मसु ॥ ४२ ॥**

(प्रकाशिका)

उत्पाट्येति । हरितां सूर्याश्वानाम् । आक्रीड उद्यानम् ॥ ४२ ॥

( विवरणम् )

धनापहरणमाह—

उत्पाट्येति । तेन मेरुशृङ्गाणि उत्पाट्य स्वेषु वेश्मसु आक्रीडपर्वताः कल्पिताः । तेन तारकेण मेरोर्महामेरोः शृङ्गाणि शिखराणि उत्पाट्य उन्मूल्य स्वेषु आत्मीयेषु वेश्मसु गृहेषु आक्रीडपर्वताः आक्रीड उद्यानम् । 'पुमानाक्रीड उद्यानमि'त्यमरः । आक्रीडेषु ये पर्वताः क्रीडापर्वताः तत्त्वेन कल्पिताः । मेरुशिखराणि तेन क्रीडापर्वतविधानेपूपयोजितानीत्यर्थः । उत्पाटनसौकर्यमाह — हरितां खुरैः क्षुण्णानीति । हरितां सूर्याश्वानाम् । 'सूर्ये सूर्यतुरङ्गे च मेरौ च हरिदिष्यत' इति भोजः । खुरैः पादाग्रभागैः क्षुण्णानि परिमृदितानि । मेरुपर्यन्तभागेनानुदिनं गच्छतां रवितुरगाणां खुरैरुद्धरणयोग्यतामापादितानीत्यर्थः । धनापहरणस्य दारापहरणवदत्यन्तासह्यत्वाभावादेव तदनन्तरमुपादानमित्यवसेयम् ॥ ४२ ॥

**मन्दाकिन्याः पयः शेषं दिग्वारणमदाविलम् ।**
**हेमाम्बुरुहसस्यानां तद्वाप्यो धाम साम्प्रतम् ॥ ४३ ॥**

(प्रकाशिका)

मन्दाकिन्या इति । शेषं शिष्टम् । अन्यत् किं कुत्रोपयुक्तमित्याह— हेमेति । तेन हेमाब्जानि स्ववापीविरचनायामुपयोजितानि मेरुशृङ्गाणीवाक्रीडपर्वतविधान इत्यर्थः । दिग्वारणमदाविलत्वं तदुपेक्षाहेतुः । साम्प्रतमिति अयमपरः कालो वर्तत इत्यर्थः ॥ ४३ ॥

---

१. 'म्भो' मुद्रितकोशपाठः.

(विवरणम्)

अथोपभोगसाधनानां कनकारविन्दादीनामप्यपहरणमाह—

मन्दाकिन्या इति। मन्दाकिन्याः पयः शेषम्। मन्दाकिन्याः सुरदीर्घिकायाः। 'मन्दाकिनी वियद्गङ्गा स्वर्णदी सुरदीर्घिके'त्यमरः। पयः शेषं शिष्टमित्यर्थः, भवतीति शेषः। 'त्रिष्वन्यत्रोपयुक्तत' इति केशवस्वामिवचनात् शेषशब्दस्याभिधेयलिङ्गत्वं 'सप्तर्षिहस्तापचितावशेषाणि'(स.१.श्लो.१६)इतिवद् द्रष्टव्यम्। किं वा तदन्यत्, कुत्र वा तदुपयुक्तमित्यत्राह—साम्प्रतं हेमाम्बुरुहसस्यानां तद्वाप्यः धामेति। साम्प्रतमिदानीम्। अनेनास्य कालस्य पूर्वस्मात् कालाद् महान् विशेषो जात इति ध्वन्यते। हेमाम्बुरुहसस्यानां हेमाम्बुरुहाणां सुवर्णपङ्कजानां सस्यानां व्रीह्यादीनाम्। उत्खातप्रतिरोपणात् सुवर्णपङ्कजेषु सस्यत्वारोपः। प्रधानोपभोगसाधनत्वप्रतीतिश्च फलम्। तद्वाप्यः तस्य वाप्यो दीर्घिकाः। 'वापी तु दीर्घिके'त्यमरः। धाम गृहम्। तारकासुरः सुवर्णपङ्कजान्युन्मूल्य स्ववापीरचनायामुपयोजितवान्। ततश्च तत्र जलमात्रमवशिष्टं भवतीत्यर्थः। ननु पयांसि केन नापहृतानि, अत आह—दिग्वारणमदाविलमिति। दिग्वारणानां दिग्गजानां (मदेन) मदजलेन (आविलं कलुषं) कलुषीकृतमिति भावः। अत्र पर्यायोक्तं स्फुटम्॥ ४३॥

**भुवनालोकनप्रीतिः स्वर्गिभिर्नानुभूयते।**
**खिलीकृते विमानानां तदापातभयात् पथि॥ ४४॥**

(प्रकाशिका)

भुवनेति। भुवनमर्थात् स्वर्गादन्यत्। खिलीकृते सञ्चारवर्जिते विमानानां पथीत्यन्वयः। आघातोऽवस्कन्दः॥ ४४॥

---

१. 'कः' घ. पाठः. 'भू'. २, 'पा' मुद्रितकोशपाठः.

(विवरणम्)

उपरोधमाह—

भुवनेति। विमानानां पथि तदाघातभयात् खिलीकृते स्वर्गिभिः भुवनालोकनप्रीतिः न अनुभूयते। विमानानां व्योमयानानाम्। 'व्योमयानं विमानोऽस्त्री'त्यमरः। पथि मार्गे तदाघातभयात् तस्य तारकासुरस्याघातस्तदाघातः (तस्मात्), तारकासुरकर्तृकादाघातादित्यर्थः। आघातोऽवस्कन्दः अभिभव इति यावत्। आघाताद् यद् भयं तस्माद्धेतोः खिलीकृते सञ्चारवर्जिते। 'खिलमप्रहतस्थानमि'ति भोजः। निमित्तसप्तमी चेयम्। स्वर्गिभिर्देवैः भुवनालोकनप्रीतिः भुवनानां स्वर्गादन्येषां लोकानां स्वर्गेऽपि स्वावस्थितप्रदेशव्यतिरिक्तप्रदेशानामिति चार्थादायाति। आलोकनं दर्शनं तेन या प्रीतिः सा नानुभूयते न प्राप्यते तारकासुराभिभवभयात्। कुत्रापि गुहायामेवास्माकमिदानीमवस्थानमित्यर्थः॥ ४४॥

**यज्वभिः सम्भृतं हव्यं विततेष्वध्वरेषु सः।**
**जातवेदोमुखान्मायी मिषतामाच्छिनत्ति नः॥ ४५॥**

(प्रकाशिका)

**यज्वभिरिति**। सम्भृतमर्पितम्। हव्यं हविः। विततेषु प्रवृत्तेषु। उपक्रमे तु शाठ्यान्न विघ्नमाचरतीति भावः। मायी माययेत्यर्थः॥ ४५॥

(विवरणम्)

भोजनस्याप्यपहरणमाह—

यज्वभिरिति। सः अध्वरेषु विततेषु यज्वभिः सम्भृतं हव्यं मिषतां नः जातवेदोमुखाद् आच्छिनत्ति। सः तारकासुरः अध्वरेषु यागेषु विततेषु प्रवृत्तेषु सत्सु यज्वभिः विधिना कृतयज्ञैर्यजमानैः। 'सुयजोर्ङ्वनिप्'

---

१. 'कस्या' घ. पाठः. २. 'कः अ' घ. पाठः.

(३. २. १०३)इति यजेर्ङ्वनिप्। 'यज्वा तु विधिनेष्टवानि'त्यमरः। अनेन हव्यस्यादरणीयत्वं ध्वनितम्। सम्भृतमर्पितम्। मिषतामित्यनादरे षष्ठी। 'मिष स्पर्धायामि'ति धातुः। 'स्पर्धायां मिषतीति स्यादि'ति देवः। स्पर्धमानानस्माननादृत्येत्यर्थः। उन्मिषतोऽस्माननादृत्येति वा। जातवेदोमुखाद् जातवेदा अग्निः, जातवेदा एव मुखं जातवेदोमुखम्। अग्निरेव हि देवानां मुखम्। तस्माद् आच्छिनत्ति अपहरति। क्रतोरुपक्रमे शाठ्यान्न विघ्नमाचरति। प्रवृत्ते तु यागे वदनादेव हविराहरति चेति भावः। ननु कथं मिषतामेव भवतां हविराहरणोपपत्तिरत आह — मायीति। मायास्यास्तीति मायी। व्रीह्यादित्वादिनिः। मायावी मायामाश्रित्याहरतीत्यर्थः॥ ४५॥

**उच्चैरुच्चैःश्रवास्तेन हयरत्नमहारि च।**
**देहबन्धमिवेन्द्रस्य चिरकालार्जितं यशः॥ ४६॥**

(प्रकाशिका)

उच्चैरिति। उच्चैस्त्वं हयानां प्रधानगुणः। महत् सुसंहतमिति शरीरलक्षणे वचनात्। उपलक्षणं चैतदन्येषां गुणानाम्। देहं बध्नातीति देहबन्धं, मूर्तिमदित्यर्थः। चिरकालार्जितमिति उच्चैस्त्वहेतुः लोभनीयत्वादेश्च द्योतकम्। अत्र प्रकरणे 'तेन'(श्लो. ४०)इत्यादिना विध्वंसनम्, 'उत्पाट्य'(श्लो. ४२)इत्यादिना 'मन्दाकिन्या'(श्लो. ४३) इत्यादिना चापवाहनं, 'भुवन'(श्लो. ४४) इत्यादिनोपरोधः, अन्यैस्तु विलोप इति विग्रहप्रकारा उक्ताः॥ ४६॥

( विवरणम् )

किं बहुना महेन्द्रस्याश्वरत्नमपि तेनापहृतमित्याह—

उच्चैरिति। तेन उच्चैःश्रवाः हयरत्नं च अहारि। तेन तारकेण उच्चैःश्रवा इति इन्द्राश्वस्य नाम। 'हय उच्चैःश्रवा' इत्यमरः। हयरत्नं हयश्रेष्ठः

१. 'द्व' मुद्रितकोशपाठः.

चकारोऽपिशब्दार्थे । किमन्येषामपहरणेन विद्यते, जयसाधनभूतमश्वरत्नमप्यपहृतमित्यर्थः । अहारि अपहृतम् । उच्चैःश्रवसः स्वजातिश्रेष्ठत्वे हेतुमाह—उच्चैरिति । उच्चैरित्यव्ययम् । उन्नतमित्यर्थः । 'महत्युच्चैरि'त्यमरः । अनेनाश्वविशेषणेनान्येभ्यः प्रधानगुणसद्भाव उक्तः । उन्नतत्वमश्वानां प्रधानगुणः, शरीरलक्षणे 'महत् सुसंहतामि'त्युक्तत्वात् । उपलक्षणं चैतदन्येषामपि गुणानाम् । अश्वरत्नमुत्प्रेक्षते — इन्द्रस्य चिरकालार्जितं यशः देहबन्धमिवेति । इन्द्रस्य महेन्द्रस्य चिरकालार्जितं बहुकालसञ्चितम् । एतदुन्नतत्वे हेतुः, लोभनीयत्वादिकं च ध्वनति । चिरकालसञ्चितं[3] हि वस्तु लोभनीयं भवति । तदपहरणं च खेदमातनोति । यशः कीर्तिः देहं बध्नातीति देहबन्धम् । कर्मण्यण् । मूर्तिमदित्यर्थः । उभयोरपि धावल्यमतिमहत्त्वं[4] चोत्प्रेक्षाहेतुः । अश्वापहारे तस्य[5] यशसोऽप्यपहृतत्वप्रतीतिः फलम् ॥ ४६ ॥

**तस्मिन्नुपायाः सर्वे नः क्रूरे प्रतिहतक्रियाः ।**
**वीर्यवन्त्यौषधानीव विकारे सान्निपातिके ॥ ४७ ॥**

(प्रकाशिका)

तर्हि किमन्यैरुपायैर्नोपक्रान्तमित्याह—

**तस्मिन्निति** । सर्वे, न केवलमुक्ता संश्रयवृत्तिः । क्रूरे कठिने अभेद्यचित्त इत्यर्थः । प्रतिहता क्रिया कार्यजननं येषाम् । विकारे ज्वरे । सान्निपातिके दोषत्रयसन्निपातभवे ॥ ४७ ॥

(विवरणम्)

ननु समाश्रयप्रवृत्तिव्यतिरेकेणान्येऽप्युपायाः सन्ति नाम । ते किं न तस्मिन् प्रयुक्ता इत्याशङ्क्य प्रयुक्तानामपि तेषां वैफल्यमाह—

---

१. 'तः' घ. पाठः. २. 'त्वं ह्यश्वा' ख. पाठः. ३. 'तमेव व' ख. पाठः.
४. 'महत्त्वं धावल्यं चो' ख. पाठः. ५. 'स्य य' घ पाठः.

तस्मिन्निति। नः सर्वे उपायाः तस्मिन् प्रतिहतक्रियाः। नः अस्माकम्। सर्वे, न केवलं संश्रयवृत्तिपर्यन्तः (सामा?सन्ध्या)दिप्रयोगः, अपितु सामादिप्रयोगोऽपीति भावः। उपायाः सामादयः। तस्मिन् तारके। प्रतिहता कृतप्रतिहनना क्रिया कार्यजननं येषां ते तथा। आसान्निति शेषः। अत्रोपमामाह — सान्निपातिके विकारे वीर्यवन्ति औषधानीवेति। सान्निपातिके, वातपित्तश्लेष्मसमाहारः सन्निपातः, सन्निपातादुद्भूतः सान्निपातिकः, तादृशे विकारे ज्वरादौ वीर्यवन्ति प्रशस्तवीर्ययुक्तानि। प्रशंसायां मतुप्। औषधानि मुस्तापर्पटकादीनीव। दोषत्रयसम्भवे ज्वरादौ महावीर्याण्यौषधानीवास्माकमुपायाः सर्वेऽपि तारके प्रतिहतशक्तयो जाता इत्यर्थः। सन्निपातज्वरादावौषधानां निष्फलत्वमुक्तं वैद्यशास्त्रे—

> "वातपित्तकफानां च सन्निपातो यदा भवेत्।
> तदा जातो ज्वरस्तीव्रो ह्यसाध्यः सर्वभेषजैः ॥"

इति। उपमानोपमेययोः साधारणं[2] धर्ममाह—क्रूर इति। असुरविजयित्वादभेद्यचित्ते दोषत्रयसम्भूतत्वादसाध्ये चेत्यर्थः ॥ ४७ ॥

**जयाशा यत्र चास्माकं प्रतिघातोद्गतार्चिषा।**
**हरिचक्रेण तेनास्य कण्ठे निष्कमिवार्पितम् ॥ ४८ ॥**

(प्रकाशिका)

सर्वोपायेभ्यो बलवत्तमो दण्डः कथं न फलेदित्याह—

**जयाशेति। यत्र जयाशास्माकमिति दण्डोपाये मूर्धाभिषिक्तत्वं द्योतयति। निष्क उरःकण्ठभूषणम्। 'साष्टे शते सुवर्णानां हेम्न्युरोभूषणे पले। दीनारेऽपि च निष्कोऽस्त्री'ति सिंहः। कण्ठकाठिन्यात् प्रति-**

---

१. 'तस्म दु' घ. पाठः. २. 'णध' घ. पाठः. ३. 'थे विकारे दो' ग. पाठः. ४. '.त्थ' मुद्रितकोशपाठः.

हतभज्वलितेन कण्ठगतेन हरिचक्रेण हेतुनास्य कण्ठे निष्कोऽर्पित इवेत्युत्प्रेक्ष्यते ॥ ४८ ॥

( विवरणम् )

ननु सर्वोपायेभ्यो बलवत्तरो दण्डः किं न तास्मिन् फलित इत्यत्राह—

जयाशेति । यत्र अस्माकं जयाशा तेन हरिचक्रेण च अस्य कण्ठे निष्कमर्पितमिव । यत्र यस्मिन् हरिचक्रे अस्माकं जयाशा जेष्यामो वयमनेनेत्याशा, पूर्वमासीदिति शेषः । अनेन विष्णुचक्रस्य दण्डोपायेषु मूर्धाभिषिक्तत्वं द्योत्यते । तस्याप्यत्र निष्फलत्वमाह — तेनेत्यादिना । तेनास्मदाशानिष्ठितेन हरिचक्रेण विष्णोश्चक्रेण[1] सुदर्शनेन हेतुभूतेन । अपिशब्दार्थे चकारः । स चास्य तादृशावस्थाप्राप्त्यनुपपत्तिं द्योतयति । अस्य तारकासुरस्य कण्ठे गले निष्कमुरोभूषणम् । 'साष्टे शते सुवर्णानां हेम्न्युरोभूषणे पले । दीनारेऽपि च निष्कोऽस्त्री'[2]त्यमरः । अर्पितं न्यस्तमिव । उत्प्रेक्षायां हेतुमाह— प्रतिघातोद्गतार्चिषेति । प्रतिघातः प्रतिहननम् । भावे घञ् । तेनोद्गतमुत्थितम् अर्चिः ज्वाला यस्य तेन । शिलातलकर्कशे तत्कण्ठे विष्णुचक्रे पातिते सति कण्ठदेशकाठिन्यादुद्गतया वक्षःप्रदेशपर्यन्तं लम्बमानयानलज्वालयास्य कण्ठदेशे महत्तरमुरोभूषणमर्पितमिवेत्यर्थः । उत्प्रेक्षया हरिचक्रस्यापि तस्मिन् कुण्ठशक्तित्वं सूचितम् ॥ ४८ ॥

**तदीयास्तोयदेष्वद्य पुष्कलावर्तकादिषु ।**
**अभ्यस्यन्ति तटाघातं निर्जितैरावता गजाः ॥ ४९ ॥**

(प्रकाशिका)

अथ तदवष्टम्भेन तदीयानां दुर्विलसितं दिङ्मात्रेण दर्शयति—

तदीया इति । प्रलयकाल एव वर्षित्वात्[3] तोयपूर्णत्वम् । पुष्क-

---

१. 'ष्णुचक्रे' घ. पाठः. २. 'ति सिंहः । अ' घ. पाठः. ३. 'र्धुक्तत्वा' घ. पाठः.

लावर्तकादिषु प्रलयकार्यार्थे[1] सम्भृतेषु देवराजवल्लभेषु कूटस्थमेघेषु। यदाह—'जातं वंशे भुवनविदिते पुष्कलावर्तकानाम्'(पू० मे० ६) इति। आदिशब्देन राजावर्तकादयो गृह्यन्ते। तटाघातमभ्यस्यन्तीति, लोभनीयेष्वपि परधनेषु[2] दृप्तानां सुलभा निर्दयतेति भावः। निर्जितैरावता इति दर्पकण्डूविनोदस्यान्यत्र दुर्लभत्वं द्योतितम्॥ ४९॥

(विवरणम्)

इत्थं निष्फले सति हरिचक्रे देवेषु च पराङ्मुखेषु विजितलोकत्वेन निवृत्तयुद्धसम्भ्राणां तारकासुरपरिजनानां दुर्विलसितं दिङ्मात्रेण दर्शयति—

तदीया इति। तदीयाः गजाः अद्य पुष्कलावर्तकादिषु तोयदेषु तटाघातम् अभ्यस्यन्ति। तदीयास्तारकासुरसम्बन्धिनः। अनेन गजानां तदीयस्वाभिमानित्वाद् गर्वोद्रिक्तत्वं सूचितम्। तारकासुरसम्बन्धित्वादस्माकं के वा प्रतियोद्धार इति हि तेषामभिमानः। अद्य इदानीं, युद्धप्रसङ्गवार्तयापि विरहितेऽस्मिन् काल इत्यर्थः। पुष्कलावर्तकादिषु पुष्कलावर्तकः प्रलयकालवर्षशीलो महामेघः[3], स आदिर्येषामिति तद्गुणसंविज्ञानो बहुव्रीहिः। आदिशब्देन राजावर्तकादीनामुपादानम्। तोयदेषु मेघेषु। ते हि तोयदाः प्रलयकार्यसिद्ध्यर्थं[4] देवराजेन सम्भृता नित्यास्तस्य प्रियतराश्च। यथोक्तं मेघसन्देशे—'जातं वंशे भुवनविदिते पुष्कलावर्तकानां जानामि त्वां प्रकृतिपुरुषं कामरूपं मघोनः' इति। तटाघातं वप्रक्रीडां, मत्तानां गजानां गिरिवप्रादिषु कण्डूविनोदनार्थं यो दन्तप्रहारः तमित्यर्थः। अभ्यस्यन्ति पुनः पुनः कुर्वन्ति। ते हि तोयदाः प्रलयकाल एव वर्षन्तीति तेषां नित्यं तोयपूर्णत्वेन काठिन्यात् तेषु तटाघातोपपत्तिः। तद्गजानां दृप्तत्वे हेतुमाह— निर्जितैरावणा इति। निर्जितः नितरां जितः ऐरावणः ऐरावतो यैस्ते तथा। 'ऐरावतोऽभ्रमातङ्गैरा-

---

१. 'र्थे भृते' घ. पाठः. २. 'नयस्या' घ. पाठः ३. 'घः आ' क. ख. ग. पाठः. ४. 'द्ध' घ. पाठः.

वणाग्रमुवल्लभा' इत्यमरः । अनेन विशेषणेन दर्पकण्डूविनोदनस्यान्यत्र दुर्लभत्वं द्योत्यते ॥ ४९ ॥

**तदिच्छामो विभो! स्रष्टुं सेनान्यं तस्य शान्तये ।**
**कर्मबन्धच्छिदं धर्मं भवस्येव मुमुक्षवः ॥ ५० ॥**

(प्रकाशिका)

अथात्र प्रतीकाररूपं स्वाभिलषितं प्रस्तौति—

तदिति । तत् तस्माद्, यस्मादेवमापदन्यश्चोपायो न विद्यते । शान्तये नाशाय । कर्मबन्धच्छिदं निवृत्तिलक्षणम् । भवस्य संसारस्य । उपमानेनैकान्तसिद्धिमाशंसते ॥ ५० ॥

(विवरणम्)

इत्थं देवानां तारकासुरकृतां महतीं पीडां प्रतिपाद्य तत्र प्रतीकाररूपं स्वाभिलषितमर्थयते—

तदिति । हे विभो! तद् वयं तस्य शान्तये सेनान्यं स्रष्टुम् इच्छामः । विभो! प्रभो! भवतः किं दुष्करमिति भावः । तद् यस्माद् वयमेवमापन्नाः, आपन्निवृत्त्यर्थमुपायान्तरं च न विद्यते, तस्माद्धेतोः तस्य तारकस्य शान्तये नाशाय । 'क्षमायां निर्विकारत्वे तथाविघ्ननिवर्तने । परिक्षये च शान्तिः स्यादि'ति भोजः । सेनान्यं देवसेनानायकम् । सेनां रक्षां नयतीति सेनानीः तं स्रष्टुं निर्मातुम् इच्छामः अभिलषामः । अत्रोपमामाह— मुमुक्षवः भवस्य कर्मबन्धच्छिदं धर्ममिवेति । मुमुक्षवो मोक्षेच्छवः भवस्य संसारस्य, जननस्येत्यर्थः । 'भवः संसाररुद्रयोरि'ति भोजः । शान्तय इति अत्रापि योज्यम् । कर्मबन्धच्छिदं कर्मणां बन्धः कर्मबन्धः, कर्मबन्धं छिनत्तीति कर्मबन्धच्छित् तं, निवृत्तिलक्षणं धर्ममित्यर्थः । यथा मुमुक्षवो भवस्य शान्तये नि-

---

१. 'प्रायं प्र' ङ. पाठः. २. 'दो' घ., 'बा' क. ग. पाठः. ३. 'मर्थय' ख. पाठः.

वृत्तिलक्षणं धर्ममिच्छन्ति, तथा वयं तस्य शान्तये सेनान्यमित्यर्थः । अनेनोपमानेन देवानां तारकासुरभयनिवृत्तिमात्रं न केवलमाकाङ्क्षितम्, अपितु सर्वभयनिवृत्तिरेवेति ध्वन्यते । एतादृशार्थप्रार्थनसमर्थत्वादेवादौ 'स द्विनेत्रो हरेश्चक्षुर्दशचक्षुश्शताधिकम्'(श्लो. २९)इत्युक्तम् ॥ ५० ॥

**गोप्तारं सुरसैन्यानां यं पुरस्कृत्य गोत्रभित् ।**
**प्रत्यानेष्यति शत्रुभ्यो बन्दीमिव सुरश्रियम्[1] ॥ ५१ ॥**

(प्रकाशिका)

सेनान्यां लब्धेऽपि कथमेकान्तसिद्धिः, कस्तस्य परिकरः, कीदृशो वा स भवेदित्याह—

**गोप्तारमिति** । यं यादृशशक्तियुक्तम् । पुरस्कृत्येति देवैः परिकरितत्वमुक्तं, गोत्रभिदिति दुर्वारशक्तित्वं, प्रत्यानेष्यतीत्येकान्तसिद्धिः । कथमीदृशोऽसौ तादृशेन सेनान्या न कार्यं साधयेदिति भावः ॥ ५१ ॥

(विवरणम्)

ननु सृष्टेऽपि सेनान्यां कथमात्यन्तिकभयनिवृत्तिः, कश्च तस्य परिकरः, कीदृशो वा स भवेदित्यत्राह—

गोप्तारमिति । गोत्रभिद् यं पुरस्कृत्य शत्रुभ्यः बन्दीमिव सुरश्रियं प्रत्यानेष्यति । गोत्रभित् पर्वतपक्षच्छेदी देवेन्द्रः । अनेन देवेन्द्रस्यैव सहजदुर्वारशक्तिमत्त्वं द्योत्यते । सेनानीलाभे स एव जेतुं समर्थ इत्यर्थः । यं सेनान्यं पुरस्कृत्य अग्रतः कृत्वा । अनेन सेना(नी?न्यः) सुरपरिकरत्वमुक्तम् । शत्रुभ्यः शत्रुजनसकाशाद्, न केवलं तारकासुरादिति बहुवचनस्यार्थः । अनेनात्यन्तिकभयविनाश उक्तः । बन्दीं हठहृतमहिलामिव सुरश्रियं देवलक्ष्मीं प्रत्यानेष्यति प्रत्यानेतुं समर्थो भवेदिति भावः । यादृशेन सेनान्या तादृशशक्तियुक्तो महेन्द्रः स्वयमेव हठहृतमहिलामिव शत्रुवशवर्तिनीं देवलक्ष्मीं

---

१. 'जयश्रि' मुद्रितकोशपाठः.

प्रत्यानेष्यति। न्द्यशस्त्वया सृज्यतामित्यर्थः। सृष्टे तु सेनान्यां गोत्रभित् स्वयमेव साधयिष्यति चेति भावः। अत्र प्रबलशत्रुवशव(र्तिनां?र्तनं) तज्जयानन्तरमात्मवशव(र्तिनां?र्तनं) च सुरश्रीबन्द्योः साधारणो धर्मः। अथवा बन्दीमिति जातावेकवचनम्। बन्दीमिव सुरश्रियमित्यस्य बन्दीः[1] सुराश्रियं चेत्यर्थः। यथा रघुवंशे—'वन्यैः पुलिन्दैरिव वानरैस्ताः क्लिश्यन्त उद्यानलता मदीयाः' (स० १६. श्लो. १९) इति। सेनानीशब्दस्यार्थमाह—सुरसैन्यानां गोप्तारमिति। सुराणां देवानां सैन्यानि सुरसैन्यानि तेषां गोप्तारं रक्षितारम् ॥ ५१ ॥

**वचस्यवसिते तस्यै[2] ससर्ज गिरमात्मभूः।**
**गर्जितानन्तरां वृष्टिं सौभाग्येन जिगाय सा ॥ ५२ ॥**

(प्रकाशिका)

ब्रह्मणः प्रतिवचनमाह—

**वचसीति।** अवसिते निराकाङ्क्ष[3] इत्यर्थः। अनेन वाचो[4]ऽवसर उक्तः। उपमानेन विश्वोपकारैकत्वं द्योत्यते। तत्राप्यनन्तरशब्दोऽवसरद्योतकः ॥ ५२ ॥

( विवरणम् )

अथ ब्रह्मणः प्रतिवचनप्रस्तावं वर्णयति—

**वचसीति।** तस्य वचसि अवसिते आत्मभूः गिरं ससर्ज। तस्य गुरोः वचसि अवसिते, आकाङ्क्षान्तरविरहिते सतीत्यर्थः। अनेन ब्रह्मणो वचनावसर उक्तः। आत्मभूः ब्रह्मा गिरं वाचं ससर्ज उवाचेत्यर्थः। ब्रह्मणो वचनस्य लोकोपकारकत्वं वृष्ट्युपमानेन दर्शयति—सा सौभाग्येन गर्जितानन्तरां वृष्टिं जिगायेति। सा गीः सौभाग्येन सुभगत्वेन गर्जितानन्तरां गर्जितं मेघनिर्घोषः। 'स्तनितं गर्जितं मेघनिर्घोष' इत्यमरः। तस्मा-

---

१. 'न्दीं' क. ख. ग. पाठः. २. 'स्मिन् स' मुद्रितकोशपाठः. ३. 'ङ्क्षित इ' क. ख. घ. पाठः. ४. 'वचनाव' ङ. पाठः. ५. 'रत्वं' ङ. पाठः.

दनन्तराम् अव्यवधानाम्, अम्भोधरनिनदानन्तरसम्भवामित्यर्थः। गर्जितानन्तरशब्देन वृष्टेरवसर उक्तः। वृष्टिं वर्षम्। जिगाय जितवती। अत्र तारकासुरवृत्तान्तप्रतिपादकस्य गुरुवचनस्य गर्जितोपमानेन गाम्भीर्यं भयहेतुत्वं च व्यज्यते, ब्रह्मवचनस्य वृष्ट्युपमानेन लोकोपकारकत्वम्। परमेष्ठिनः प्रतिवचनं वर्षमिव सर्वानप्यानन्दयामासेत्यर्थः॥ ५२॥

**सम्पत्स्यते वः कामोऽयं कालः कश्चित् प्रतीक्ष्यताम्।**
**न त्वस्य सिद्धौ यास्यामि सर्गव्यापारमात्मनः॥ ५३॥**

(प्रकाशिका)

सम्पत्स्यत इति। कामोऽनर्थपरिहारः। अयमिति सेनानीलाभद्वारकः। ननु 'हिमवति दिव्यौषधयः कोपाविष्टः फणी शिरसी'तिवत् सुदूरस्थे प्रतिकारे प्रत्युपस्थिते चानर्थे कास्माकं प्रतिपत्तिरित्याह—काल इति। कालो हि सकलसाधनमिति भावः। कश्चिदिति कार्यक्षमः। प्रतीक्ष्यतां, तावत्कालं सहिष्णुतैव प्रतिपत्तिरित्यर्थः। सम्पादयिष्यामीति किं नोक्तमित्याह—न त्विति। अस्य कामस्य। सिद्धौ सिद्धिमुद्दिश्य। आत्मन इति कर्मणि षष्ठी। अंशेनात्मानं न स्रक्ष्यामीत्यर्थः॥ ५३॥

(विवरणम्)

तामेव गिरं प्रपञ्चयति—

सम्पत्स्यत इति। युष्माकम् अयं कामः सम्पत्स्यते। अयं सेनानीलाभद्वारकः कामः अनर्थपरिहारः सम्पत्स्यते भविष्यति। ननु प्रत्युपस्थिते महत्युपद्रवे कथं सम्पत्स्यत इति भविष्यत्कालनिर्देशः। कोपाविष्टे महति फणिनि शिरसि वर्तमाने हिमवच्छिखरे कुत्रापि दिव्यौषधयो भविष्यन्तीति विषवैद्यवचनमिव भवतो वचनमिदमस्माकं प्रतिभातीत्यत्राह—कश्चित् कालः प्रतीक्ष्यतामिति। कश्चिद् योऽस्माकमनुकूलत्वात् कार्यसाधनक्षमः, स इत्यर्थः। कालः उपरिष्टात्। प्राप्तिपरिहारयोः कालो हि साक्षात् साधनमिति

---

१. 'वृत्ति' ङ. पाठः.

भावः । तदुक्तं श्रीभागवते—'तदा वयं विजेष्यामो यदा कालः प्रदक्षिणः' (स्क०. १०. अ० ५४. श्लो० १६) इति । प्रतीक्ष्यतां प्रतिपाल्यताम्, जयानुकूलकालप्राप्तिपर्यन्तमुपद्रवसहिष्णुतैव कर्तव्येति भावः । ननु भवतां काममहमेव सम्पादयिष्यामीति वचनमपहाय किमत्रभवता 'सम्पत्स्यत' इति पृथग्जनवत् कथितमित्यत्राह—अहमस्य सिद्धौ आत्मनः सर्गव्यापारं न तु यास्यामीति । अस्य भवद्भिरिदानीं प्रार्थितस्य कामस्य सिद्धौ प्राप्तिमुद्दिश्य । आत्मन इति कर्मणि षष्ठी । आत्मांशेनैवात्मानं न स्रक्ष्यामीत्यर्थः । सर्गव्यापारं सृष्टिकर्म । तुशब्दोऽवधारणे । नैव यास्यामीत्यर्थः । भवतामस्याभिलषितस्य सिद्धिमहमेवांशेन (न) करिष्यामीति भावः ॥ ५३ ॥

**इतः स दैत्यः प्राप्तश्रीर्नेत एवार्हति क्षयम् ।**
**विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम् ॥ ५४ ॥**

(प्रकाशिका)

अत्र हेतुमाह—

**इत** इति । अभिनयविशेषादिदंशब्दोऽस्मदर्थं बोधयति । अत्र प्रतिवस्तु विषेति । दाक्षिणावर्तस्तु 'संवर्ध्यः' इति पदच्छेदमाह । तत्तु न चतुरश्रं, निर्हेतुकत्वदोषात् । क्षयस्यैव निषेध्यत्वेन प्रस्तुतत्वाच्च । 'विषवृक्षम्' इति तु भवितव्यमित्याशङ्क्याह वामनः 'निपातेनाप्यभिहिते कर्मणि न कर्मविभक्तिः, परिगणनस्य प्रायिकत्वात्' (काव्या० सू० अधि० ५. अध्या० २. सू. २२) इति । 'तिङ्कृत्तद्धितसमासैरि'ति सूत्रे* परिगणनं, तस्य प्रायिकत्वात् । तिङादिना हि बाहुल्येन कर्मणोऽभिधानमिति परिगणनं, न तु नियमार्थम् । तस्मादनभिधानमेव विभक्तेः प्रयो-

---

१. 'तुल्य' क. ख. घ. ङ. पाठः.

---

* 'अनभिहिते' (२. ३. १) इति सूत्रे ।

जकमिति निपातेनापि यत् कर्माभिहितं तत्र न द्वितीया । असाम्प्र-तमिति तद्धितान्तो निपात्यतेऽयुक्तमित्यस्यार्थे । तस्य चार्थः कर्म । तच्च निपातेनाभिहितमिति न द्वितीया ॥ ५४ ॥

(विवरणम्)

ननु किमत्र कारणमित्यत्राह—

इत इति । इतः प्राप्तश्रीः सः दैत्यः इत एव क्षयं नार्हति । अभि-नयविशेषादितश्शब्दोऽयमस्मच्छब्दार्थः । बहुविधैस्तपोभिस्तुष्टान्मत्त इत्यर्थः । प्राप्तश्रीः प्राप्ता श्रीः ऐश्वर्यं येन स तथा । स दैत्यस्तारकासुरः । इतः मत्स-काशादेव । क्षयं नाशं । नार्हति । मया दत्तवरस्य दैत्यस्य मयैव हन्तुम-योग्यत्वादित्यर्थः । अत्र प्रतिवस्तूपमामाह—विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतमिति । विषवृक्षो नाम प्राणिनां मरणप्रदो वृक्षविशेषः । तदुक्तं—

"यस्य स्पर्शनमात्रेण वायुसंस्पर्शनेन वा ।
म्रियन्ते जन्तवः सर्वे विषवृक्षः स कीर्तितः ॥"

इति । अपिशब्दः पूर्वोक्तस्य न्यायस्य सार्वत्रिकत्वं प्रतिपादयति । संवर्ध्य वर्धयित्वा स्वयमेवच्छेत्तुमसाम्प्रतम् अयुक्तम् । असाम्प्रतमित्यव्ययमयुक्त-मित्येतस्मिन्नर्थे । 'युक्ते द्वे साम्प्रतमि'त्यमरः । तेन, यदि केनाचित् पुरुषेण विषवृक्षोऽपि येनकेनापि कारणेन वर्धितो भवेत् तर्हि तस्यैव तद्भङ्गो न युक्त इत्यर्थः । ननु विषवृक्षोऽपीत्यत्र विषवृक्षमपीति द्वितीयाप्रयोगो युक्तः, तिङ्कृत्तद्धितसमासैरनभिहिते हि कर्मकारके द्वितीया विहिता । अत्र तु नि-पाताभिहितो विषवृक्षः । असाम्प्रतमित्यस्य निपातत्वात् । तेनैव हि विषवृक्षः कर्मत्वेनाभिहितः, न तिङ्कृत्तद्धितसमासैः । तस्माद् विषवृक्षमित्येव भवित-व्यम् । (न) । तिङ्कृत्तद्धितसमासैरिति परिगणनं न नियमार्थम् । तिङादिभि-रेव प्रायशः कर्माभिधीयत इत्येव तेषामुपादानं, न नियमार्थम् । तस्मादनभिधा-नमेव कर्मविभक्तेः प्रयोजकम् । अत्र तु निपातेनापि विषवृक्षोऽभिहित एव ।

---

१. 'धैः स्तवैस्तु' क. ख. ग. पाठः. २. 'ति भावः ।' ङ. पाठः. ३. 'कः' घ. ङ. पाठः. ४. 'त्ययु' क. ख. ग. घ. पाठः. ५. 'ते क' ङ. पाठः. ६. 'के हि द्वि' ङ. पाठः.

तस्मान्नात्र द्वितीया । तदुक्तं वामनेन—'निपातेनाप्यभिहिते कर्मणि न कर्मविभक्तिः, परिगणनस्य प्रायिकत्वाद्' इति ॥ ५४ ॥

**वृतं तेनेदमेव प्राङ् मया चास्मै प्रतिश्रुतम् ।**
**वरेणाशमितं लोकानलं दग्धुं हि तत्तपः ॥ ५५ ॥**

(प्रकाशिका)

न केवलमयुक्तं, समयभङ्गश्च स्यादित्याह—

वृतमिति। इदमिति 'नाहं त्वया निग्राह्य' इति । किमेवमभ्युपगतमित्याह—वरेणेति। तदपि लोकार्थं कृतमित्यर्थः ॥ ५५ ॥

(विवरणम्)

न केवलमयुक्तमित्येव दोषः, समयभङ्गोऽपि भवेदित्याह—

वृतमिति । तेन प्राग् इदमेव वृतम् । तेन तारकेण । इदमेव मदवध्यत्वमेवेत्यर्थः । वृतं प्रार्थितम् । स तारकासुरो वरप्रदानसमये तपसा तुष्टं मां प्रति मदवध्यत्वमेवाभ्यर्थितवानित्यर्थः । अभ्यर्थनानन्तरं देवेन तु किं कृतमित्यत्राह—मया अस्मै प्रतिश्रुतं चेति । मया तपसा तुष्टेनेति शेषः । अस्मै तारकाय। 'प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता' (१.४.४०) इति सम्प्रदानत्वाच्चतुर्थी । तथास्त्विति मया तं प्रत्यनुज्ञातं चेत्यर्थः । नन्वस्मदनुग्रहार्थी भवान् कथं तस्मै तादृशं वरं दत्तवानित्यत्राह—तत्तपः वरेणाशमितं लोकान् दग्धुमलं हि इति । तस्य तारकासुरस्य तपः वरेण तदुक्तवरप्रदानेन अशमितं शान्तिमप्रापितं सत् लोकान् त्रीनपि लोकान् दग्धुं भस्मसात्कर्तुम् अलं पर्याप्तं हि । 'अलं भूषणपर्याप्तिशक्तिवारणवाचकमि'ति सिंहः । यदि तदा तदभ्यर्थितं वरं नादास्यं, तर्हि तस्य मूर्धानं निर्भिद्य निर्गतस्तपोमयो वह्निः सर्वानपि लोकान् भस्मसादकरिष्यत् । यथोक्तं श्रीभागवते हिरण्यकशिपोस्तपःप्रसङ्गे—

---

१. 'ण श' मुद्रितकोशपाठः. २. 'वार्थि' ङ. पाठः. ३. 'कस्य' ङ. पाठः. ४. 'दि तद' ङ. पाठः.

"तस्य मूर्ध्नः समुद्भूतः सधूमोऽग्निस्तपोमयः ।
तिर्यगूर्ध्वमधोलोकानतपद् विष्वगीरितः ॥" (स्कन्धः ७.अ.३.श्लो.४)

इति । उपद्रवसहनमेव हि भस्मीभावाद् वरीयः । 'त्यजेदेकं कुलस्यार्थे' इत्यादिन्यायात् । अतो लोकानुग्रहार्थमेव मया तदुक्ता वराः सर्वे तस्मै दत्ता इति भावः ॥ ५५ ॥

**संयुगे सम्मुखीनं तमुद्यतं[1] प्रसहेत[2] कः ।**
**अंशादृते निषिक्तात्[3] तु नीललोहितरेतसः ॥ ५६ ॥**

(प्रकाशिका)

कालप्रतीक्षणे कथं भाविनी कार्यसिद्धिरित्याशङ्क्य तस्या दिङ्मात्रं दर्शयितुमुपक्रमते—

**संयुग इति । संमुखीनं 'यथामुखसम्मुखस्य दर्शनः खः' (५.२.६) इति खः । किं नास्त्येवेत्याह—अंशादिति । 'निषिक्तात् त्वि'ति पाठः । नीललोहितशब्देन कुमारजन्मसमर्थं गौरीशबलत्वं ध्वनितम् । निषेकसामर्थ्यादंशशब्देन पुत्रो[4]ऽभिधीयते ॥ ५६ ॥**

(विवरणम्)

ननु 'कश्चित् कालः प्रतीक्ष्यताम्' (श्लो. ५३) इति हि भवतोक्तं, प्रतीक्षिते तु काले कथमापत्प्रतीकारो भविष्यतीत्याशङ्क्यापत्प्रतीकारप्रकारमेव[5] दिङ्मात्रेण[6] दर्शयितुमारभते—

संयुग इति । निषिक्तान्नीललोहितरेतसः अंशाद् ऋते कः तु संयुगे सम्मुखीनम् उद्यतं तं प्रसहेत । निषिक्तात् स्त्रीयोनौ कृतनिषेकाद् नीललोहितरेतसः । नीललोहितो हरः । 'धूर्जटिर्नीललोहित' इत्यमरः । अत्र नीललोहितशब्देन गौरी[7]संमिश्रितत्वेन शबलशरीरो हरोऽभिधीयते । तेन च कुमारोत्पत्तेरानुगुण्यं ध्वनितम् । तस्य रेतो वीर्यम् । 'शुक्रं तेजोरेतसी चे'त्यमरः ।

---

१. 'सांयुगीनं त,' २. 'यतं प्र', ३. 'क्तस्य नी' मुद्रितकोशपाठः. ४. 'त्र उच्यते' ङ. पाठः. ५. 'रमे' घ. पाठः. ६. 'त्रं प्रद' क. ख. ग. ङ. पाठः. ७. 'हरसं' क, ग, घ, ङ. पाठः.

तस्यांशात्, रेतसः स्त्रीयोनौ निषिक्तोंऽशः पुत्र एवेति निषेकसामर्थ्यादंशशब्देनात्र पुत्रोऽभिधीयते। तस्मादृते हरपुत्रादन्यः क इत्यर्थः। तुशब्देनास्यान्येभ्यो व्यतिरेक उक्तः। संयुगे युद्धे। सम्मुखीनं 'यथामुखसम्मुखस्य दर्शनः खः'(५.२.६) इति खः, अभिमुखगतमित्यर्थः। उद्गदम् उत्क्षिप्तगदं तं तारकं प्रसहेत सोढुं शक्नुयात्, न कोऽपीत्यर्थः। हरपुत्र एव कालप्रतीक्षणे सति तारकासुरस्य हन्ता भविष्यति, नान्यः कोऽपीति भावः॥ ५६॥

**स हि देवः परं ज्योतिस्तमःपारे प्रतिष्ठितम्[1]।**
**परिच्छिन्नप्रभावर्द्धिर्न मया न च विष्णुना॥५७॥**

(प्रकाशिका)

तत्रापि का संभावनेत्याह—

स इति। देवो द्योतनस्वभावः। तच्च क्रीडा[2]व्यवहारद्युतिस्तुतिकान्तिगतयः। अत एवाह—परं ज्योतिरिति। देशकालाद्यवच्छिन्नप्रकाशं न भवति, तत्प्रकाशकं च। तमोऽविद्या, तस्याः पारे परस्तात्। प्रतिष्ठितं निर्विकारत्वात् कूटस्थ इत्यर्थः। उत्तरार्धेन तु उक्तोपपादनाय 'नोर्ध्वं गम्यः सरसिजभुवो नाप्यधः शार्ङ्गपाणेरि'त्यादिनोक्तमितिहासार्थमनुस्मारयति॥ ५७॥

(विवरणम्)

ननु विष्णुनाप्यवध्यं तारकासुरं[3] हरपुत्रः कथं हनिष्यतीत्याशङ्कायां हरस्य तस्माद् व्यतिरेकमाह—

स हीति। स देवः हि। सः हरः देवः द्योतनस्वभावः, क्रीडाव्यवहारद्युतिस्तुतिकान्तिगतिमानित्यर्थः। स्वयंप्रकाश इति वा। हि-

---

१. 'व्यवस्थितम्' मुद्रितकोशपाठः. २. 'डाविजिगीषाव्य' क. ख. ग. घ. पाठः. ३. 'महासु' क. पाठः.

शब्दः पुराणादिप्रसिद्धिं प्रतिपादयति। द्योतनस्वभावत्वमेवोपपादयति — परं ज्योतिः। परं देशकालाद्यनवच्छिन्नम्। तेजोन्तराणि हि देशकालाद्यवच्छिन्नानि देशकालाद्यवच्छिन्नस्यैव प्रकाशकानि च। अयं तु न तथेति भावः। ज्योतिस्तेजः। देशकालाद्यनवच्छिन्नत्वे हेतुमाह — तमःपारे प्रतिष्ठित इति। तमसः अविद्यायाः पारे परस्तात् प्रतिष्ठितः स्थितः। विनाशादिधर्मवतामविद्यातत्कार्याणां परस्तान्निर्विकारत्वात् कूटस्थनित्यत्वेनावस्थित इत्यर्थः। उक्तार्थोपपादनार्थमितिहासप्रसिद्धां कथामनुस्मारयति — परिच्छिन्नेत्यादिना। स इति अत्राप्यनुषज्यते। सः मया परिच्छिन्नप्रभावर्द्धिर्न, प्रपञ्चप्रवर्तकेन मयापीत्यर्थः। परिच्छिन्नप्रभावर्द्धिः परिच्छिन्ना इयत्तया कृतपरिच्छेदा प्रभावस्य महिम्नः ऋद्धिः समृद्धिरतिशयो यस्य स तथा। भगवानपि नारायणस्तत्परिच्छेदे मत्तोऽप्यतिरिक्तो[1] न भवतीत्याह — विष्णुना च नेति। परिच्छिन्नप्रभावर्द्धिरिति अत्रापि योज्यम्। हरतेजसामन्तमवगन्तुं हंसमारुह्य प्रजापतिरूर्ध्वं गतः। विष्णुस्तु भूदाररूपमादायाधोभागं गतः। बहुदिव्यसंवत्सरं गत्वराभ्यामुभाभ्यामपि न तदन्तोऽवगत इति पुराणप्रसिद्धा कथानेन वाक्येनोक्ता। तदुक्तं 'नोर्ध्वं गम्यः सरसिजभुवो नाप्यधः शार्ङ्गपाणेरि'ति ॥ ५७ ॥

**उमारूपेण ते यूयं संयमास्तिमितं मनः।**
**शम्भोर्यतध्वमाक्रष्टुमयस्कान्तेन लोहवत् ॥ ५८ ॥**

(प्रकाशिका)

तेजोंशनिषेकोपायमाह—

उमेति। त इति, य इत्थमनर्थप्रतीकारार्थिनः। संयमस्तिमितत्वमाकर्षणीयत्वे हेतुः। परमेश्वरस्यारूपहार्यत्वमभिप्रेत्याक्रष्टुं यतध्वमित्युक्तम्। अन्यथाकर्षतेति[2] ब्रूयात्। ननु तर्हि किमर्थोऽयं विधिः।

---

१. 'व्य' ङ. पाठः. २. 'ति। अ' क. पाठः.

न । परम्परया सार्थकत्वस्य दर्शयिष्यमाणत्वात् । अत एव वक्ष्यति— अर्थोऽयमर्थान्तरभाव्य एव (स० ३. श्लो. १८) इत्यादिना । उपमानेन तु परमेश्वरस्य नैसर्गिकं निजशक्तिपरशक्तिपराधीनत्वं ध्वनितम् । अत्र तु वतिर्निरूप्यः । 'तत्र तस्येव'(५. १. ११६) इति, 'तेन तुल्यं क्रिया चेद्वतिः'(५. १. ११५) इति सूत्रद्वयनीत्या दुर्लभत्वात् ॥ ५८ ॥

(विवरणम्)

तेजोनिषेकोपायप्रकारमप्युपदिशति—

उमारूपेणेति । ते यूयम् उमारूपेण शम्भोः मनः आक्रष्टुं यतध्वम् । ते ये सेनानीसर्गद्वारेणापत्प्रतीकारं[1] प्रार्थयन्ते, त इत्यर्थः । उमायाः पार्वत्याः रूपेण सौन्दर्येण साधनेन शम्भोः परमेश्वरस्य मनः चित्तम् आक्रष्टुम् उमाया अभिमुखं प्रवर्तयितुं । यतध्वं यत्नं कुरुत । शम्भोररूपहार्यत्वमभिप्रेत्य यतध्वमित्युक्तं, न पुनराकर्षतेति । इदानीं तु विशेषतोऽप्यनाकर्षणीयमित्याह— संयमस्तिमितमिति । रागद्वेषादिविरहः संयमः, तेन स्तिमितं निश्चलम् । उमारूपेण चित्ताकर्षणमुपमया स्फुटयति— अयस्कान्तेन लोहवदिति । अयस्कान्तेन अयस्कान्तपाषाणेन लोहवल्लोहमिव । अयो यथायस्कान्तेनाकर्षति, तद्वदित्यर्थः । अनेनोपमानेन परमेश्वरस्य स्वाभाविकमेव शक्तिपराधीनत्वमिति ध्वन्यते । अत्र वतिप्रयोगश्चिन्त्यः 'तत्र तस्येव' (५. १. ११६) इति सूत्रेण, 'तेन तुल्यं क्रिया चेद्वतिः'(५.१.११५) इति सूत्रेण च दुर्लभत्वादित्यरुणाचलनाथेनोक्तम्[2] । अतस्तन्मतानुसारिभिरस्माभिश्चिन्त्यते । 'तेन तुल्यं क्रिया चेद्वतिरि'ति तृतीयान्ताद् विहितः प्रत्ययः सर्वविभक्त्यर्थानन्तर्भावयतीति कैयटपदमञ्जर्योः प्रतिपादितम् । अत एव सर्वविभक्तीनां क्रमेणोदाहरणे 'ब्राह्मणेन तुल्यं, ब्राह्मणमिव भवन्तं पश्यामी'ति द्विती-

---

१. 'प्रकारे' ख. ग. क., 'प्रतीकारे' घ. पाठः. २. 'न व्याख्यातम्' ख. पाठः.

यार्थे वतिरुदाहृतः । तथा च 'पूर्ववत् सनः' (१.३.६२) इत्यत्र पूर्वस्मादिव पूर्ववदिति पञ्चम्यर्थे वतिर्व्याख्यातः ॥ ५८ ॥

**उभे एव क्षमे वोढुमुभयोर्वीर्यमाहितम् ।**
**सा वा शम्भोस्तदीया वा मूर्तिर्जलमयी मम ॥५९॥**

(प्रकाशिका)

निषेकं प्रत्यधिकरणान्तरस्यायोग्यत्वं दर्शयति—

उभे इति । सा उमा । तदीया शम्भुसंबन्धिनी । अनेन परमेश्वरशक्तेरेव सर्व[2]भरसहत्वमिति द्योतयति । वाशब्दोऽवधारणे । यद् वक्ष्यति 'सैव क्षमेत्यात्मभुवोपादिष्टम्' (स० ३. श्लो. १६) इति ॥ ५९ ॥

(विवरणम्)

निषेकं प्रत्यधिकरणान्तरस्यायोग्यत्वं दर्शयति—

उभे इति । उभयोः आहितं वीर्यं वोढुम् उभे एव क्षमे । उभयोरिति षष्ठ्या अत्र वीर्यशब्देनैव सम्बन्धः । आहितमित्यस्य कर्ता पुनरुभाभ्यामित्यर्थात् सिध्यति । आहितं निषिक्तं वीर्यं रेतः वोढुं प्रसवपर्यन्तं धर्तुम् उभे एव, नान्याः स्त्रियः, क्षमे शक्ते । उभाभ्यां निषिक्तमुभयोर्वीर्यं धर्तुमुभे एव योषितौ क्षमे इत्यर्थः । उभयशब्दोक्तमर्थं विविच्य दर्शयति —शम्भोः सा वा मम तदीया जलमयी मूर्तिर्वा इति । शम्भोः परमेश्वरस्य । वीर्यमित्यर्थादायाति । सा पार्वती । वाशब्दोऽवधारणार्थे । ननु 'वा विकल्पोपमानद्वन्द्वसमुच्चयेष्वि'ति निपातसूत्रे न वाशब्दस्यावधारणार्थत्वं प्रोक्तम् । सत्यम् । 'निपाता अनेकार्था' इति वचनानुसारिणा कविनात्रावधारणार्थत्वमेव विवक्षितम् । अत एव

---

१. 'बीजमा' मुद्रितकोशपाठः. २. 'वंसह' घ., 'वंभार' क. पाठः

वक्ष्यति — 'योषित्सु तद्वीर्यनिषेकभूमिः सैव क्षमेत्यात्मभुवोपदिष्टम्' (स. ३. श्लो. १६) इति । शम्भोर्वीर्यं सोढुं पार्वत्येव क्षमेत्यर्थः । मम जगत्सिसृक्षया वीर्यमुत्सृजतः । तदीया शम्भुसम्बन्धिनी । जलमयी जलस्वरूपिणी । मूर्तिः अष्टमूर्तेः परमेश्वरस्यैका मूर्तिः । मद्वीर्यभारसहिष्णुत्वमपामेवेत्यर्थः । 'यदमोघमपाम्' (श्लो. ५) इत्यादिना यदपां मद्वीर्यभारसहिष्णुत्वमुक्तं, तदपि तासां हरमूर्तिभेदत्वादेवेति वदता ब्रह्मणा परमेश्वरांशस्यैव तारकासुरनिग्रहसामर्थ्यमित्युक्तं भवति । अत्रापामुपन्यासो दृष्टान्तत्वेनेति मन्तव्यम् ॥ ५९ ॥

**तस्यात्मा शितिकण्ठस्य सैनापत्यमुपेत्य वः ।**
**मोक्ष्यते सुरबन्दीनां वेणीर्वीर्यविभूतिभिः ॥ ६० ॥**

(प्रकाशिका)

एवं कृतेऽवश्यंभाविनी सिद्धिरित्याह

तस्येति । आत्मा पुत्र इत्यर्थः । शितिकण्ठस्येत्यनेन कालकूटनिगरणं द्योतयता स देवोऽस्माकं परमापत्सु शरणमिति द्योतयति । अत्र मोक्ष्यत इत्यादि पर्यायोक्तम् । तद्वीर्यविध्वस्ते शत्रौ सुरस्त्रियः स्वभर्तृविरहभाविनं केशरचनाविशेषं त्यक्ष्यन्तीति प्रतीतेः ॥ ६० ॥

(विवरणम्)

पार्वतीपरमेश्वरयोः परस्परसम्मेलने कृते कार्यसिद्धिरवश्यं भविष्यत्येवेति वाचा देवानानन्दयति —

तस्येति । तस्य शितिकण्ठस्य आत्मा वः सैनापत्यम् उपेत्य वीर्यविभूतिभिः स्वर्गबन्दीनां वेणीः मोक्ष्यति । तस्य, य एवम्भूतप्रभावः तस्येत्यर्थः । शितिकण्ठस्य नीलकण्ठस्य । 'शिती धवलमेचकावि'त्यमरः । कालकूटनिगरणप्रभूतकण्ठनैल्यस्येत्यर्थः । अनेनायमेवास्माकमापत्सु शरणमिति द्योतयति ।

---

१. 'मम वीर्य' क. ख. ग. पाठः. २. 'थामो' क. ख. ग. पाठः. ३. 'नू' ङ पाठः. ४. 'शविर' घ. पाठः. ५. 'माप' ङ. पाठः.

आत्मा पुत्र-इत्यर्थः । 'आत्मा वै पुत्र उत्पन्न इति वेदानुशासनम्' (स्क. १०. अ. ७८. श्लो. ३६) इति श्रीभागवतवचनाद् आत्मशब्दप्रयोगेणात्र तत्पुत्रस्य परमेश्वरतुल्यशक्तित्वं ध्वनितम् । वः युष्माकं सैनापत्यं सेनापतित्वम् । 'पत्यन्तपुरोहितादिभ्यो यक्' (५.१.१२८) इति यक् । उपेत्य प्राप्य वीर्यविभूतिभिः वीर्यातिशयैः । बहुवचनेन विभूतिशब्देन च तद्वीर्याणां निरवधिकत्वं ध्वनितम् । स्वर्गबन्दीनां, बन्द्यो हठहृतमहिलाः । तारकासुरेण बन्दीकृतानां स्वर्गस्त्रीणामित्यर्थः । वेणीः संश्लिष्टकेशान् । 'वेणी प्रवेणी शीर्षण्यशिरस्यावि'त्यमरः । भर्तृविरहिता हि कुलस्त्रियः स्वकेशान् भर्तृसमागमपर्यन्तं दृढं निबध्नन्ति । यथोक्तं शाकुन्तले —

"वसने परिधूसरे वसाना नियमक्षामतनुर्धृतैकवेणिः ।
अतिनिष्करुणस्य शुद्धशीला मम दीर्घं विरहव्रतं वहन्ती ॥"

इति । मोक्ष्यति विश्लेषयिष्यति । अत्र कार्यभूतेन वेणीविश्लेषणेन कारणभूतस्तारकासुरवधः प्रतीयत इति पर्यायोक्तम् ॥ ६० ॥

**इति व्याहृत्य विबुधान् विश्वयोनिस्तिरोदधे ।**
**मनस्याहितकर्तव्यास्तेऽपि प्रतिययुर्दिवम् ॥ ६१ ॥**

(प्रकाशिका)

प्रकरणमुपसंहरति—

इतीति । व्याहृत्य तिरोदध इत्यनेन लोककार्यार्थं देवेभ्यो दत्तस्य विधातृदर्शनस्य चिरसुलभत्वं द्योत्यते । मनसीति, मनसा तमेवार्थं सङ्कल्पयन्त इत्यर्थः ॥ ६१ ॥

(विवरणम्)

प्रकरणमुपसंहरति—

इतीति । विश्वयोनिः विबुधान् इति व्याहृत्य तिरोदधे । विश्व-

---

१. 'त्मैव पु' क. ख. ग. घ. पाठः. २. 'मुखी धृ' क. ख. ग. घ. पाठः. ३. 'देवा दिवं ययुः ॥' मुद्रितकोशपाठः.

योनिर्विश्वस्य योनिरुद्भवस्थानं प्रपञ्चकर्ता ब्रह्मा विबुधान् सुरान् इति पूर्वोक्तप्रकारेण व्याहृत्य उक्त्वा तिरोदधे अन्तर्हितोऽभूत्। इति व्याहृत्यं तिरोदध इत्यनेन देवकार्यार्थमेवादौ दर्शनं दत्तं, तच्च दर्शनं तदनुग्रहप्रदानपर्यन्तं सुलभं चाभूदिति देवानां प्रमोदातिशयप्राप्तिर्ध्वनति। लब्धप्रसादानां देवानां प्रवृत्तिमाह—तेऽपि मनसि आहितकर्तव्याः दिवं प्रतिययुरिति। ते देवाः मनसि आहितं[2] निहितं कर्तव्यं करणीयं यैस्तथाभूताः सन्तः। अनन्तरकरणीयं मनसा निश्चित्येत्यर्थः। दिवं स्वर्गं प्रतिययुः, यथागतं गता इत्यर्थः ॥ ६१ ॥

**तत्र निश्चित्य[1] कन्दर्पमगमत् पाकशासनः।**
**मनसा कार्यसंसिद्धि[3]त्वराद्विगुणरंहसा ॥ ६२ ॥**

(प्रकाशिका)

अथ तदुपायानुष्ठानरूपोत्तरसर्गार्थबिन्दुमुपक्षिपति—

तत्रेति। तत्र दिवि। निश्चित्य मन्त्रेण प्रकंस्यमानमुपायानुष्ठानमवधार्येत्यर्थः। मनसा अगमत् सस्मार उपस्थानार्थम्। 'कार्यसंसिद्धित्वराद्विगुणे'ति पाठः ॥ ६२ ॥

(विवरणम्)

अथ पार्वतीपरमेश्वरसङ्गमोपायानुष्ठानरूपमुत्तरसर्गार्थबिन्दुमुपक्षिपति—

तत्रेति। पाकशासनः तत्र निश्चित्य मनसा कन्दर्पम् अगमत्। पाकशासनः इन्द्रः। 'इन्द्रो मरुत्वान् मघवा बिडौजाः पाकशासन' इत्यमरः। तत्र दिवि निश्चित्य करिष्यमाणमुपायानुष्ठानं मन्त्रिभिः सह सम्मन्त्र्य। सम्यगवधार्येत्यर्थः। मनसा कन्दर्पमगमत्। सस्मारेत्यर्थः। समीपागमनार्थमिति शेषः। स्मरणे मनसो विशेषं दर्शयति—कार्यसंसिद्धित्वराद्विगुण-

---

१. 'स इ' घ. ङ. पाठः. २. 'तं क' घ. ङ. पाठः. ३. 'द्धौ' मुद्रितकोशपाठः.

रंहसेति । कार्यस्य सेनानीलाभरूपस्यार्थस्य संसिद्धौ सम्यक्सिद्धौ या त्वरा त्वरणं तया द्विगुणं प्रवृद्धं रंहः वेगो यस्य तेन । मनसः स्वतो वेगवत्त्वाद् द्विगुणरंहसेत्युक्तम् । स्वाभिलषितस्य सेनानीलाभरूपस्यार्थस्य स्वमनोरथानुरूपे लाभे त्वरया प्रवृद्धवेगेनेत्यर्थः । अनेन मनोविशेषणेन 'कश्चित् कालः प्रतीक्ष्यताम्'(श्लो.५३) इति ब्रह्मणा निर्दिष्टस्य कालप्रतीक्षणरूपस्यांशस्य कार्यसिद्धित्वरयातिक्रान्तत्वात् कामदहनरूपो भविष्यन्ननर्थोऽपि सूचितः ॥ ६२ ॥

अथ स ललितयोषिद्भ्रूलताचारुशृङ्गं
रतिवलयपदाङ्के चापमासज्य कण्ठे ।
सहचरमधुहस्तन्यस्तचूताङ्कुरास्त्रः
शतमखमुपतस्थे प्राञ्जलिः पुष्पधन्वा ॥ ६३ ॥

(प्रकाशिका)

विन्दोराविर्भावं दर्शयति—

अथेति । अथशब्द आनन्तर्ये । स्मरणानन्तरमेवेत्यर्थः । ललितेत्याद्युपमा[1]गर्भम् । उपतस्थे, सङ्गतिकरण आत्मनेपदम् । शतमखेन सङ्गतोऽभूदित्यर्थः । अत्र विशेषणानि स्वभावोक्तिं पुष्णन्ति । सा च समीहितार्थसाधनक्षमतामस्याभिव्यनक्ति । प्राञ्जलिरिति तु विधेयत्वाभिप्रायम् ॥ ६३ ॥

इत्यरुणगिरिनाथविरचितायां कुमारसम्भवप्रकाशिकायां

द्वितीयः सर्गः ।

---

१. 'मानग' ङ. पाठः.

(विवरणम्)

अथोपक्षिप्तस्योत्तरसर्गबिन्दोराविर्भावमपि[1] दर्शयति—

अथेति। अथ सः पुष्पकेतुः कण्ठे चापम् आसज्ज्य प्राञ्जलिः शतमखम् उपतस्थे इति। अथ स्मरणानन्तरमेव। अनेन पुष्पकेतोः शतमखवशवर्तित्वमुक्तम्[2]। सः, य एवं महेन्द्रेण स्मृतः[3] स इत्यर्थः। पुष्पकेतुः कामदेवः[4] कण्ठे चापमासज्ज्य स्थापयित्वा। अनेन चापभृतां स्वभाव उक्तः। तेन च तदुक्तकरणोद्योगः सूचितः। प्राञ्जलिः कृताञ्जलिर्भूत्वेत्यर्थः। अनेन भृत्यतया तदुक्तकारित्वमुक्तम्। शतमखं शतक्रतुम्। अनेन तन्नियोगस्यानतिक्रमणीयत्वमुक्तम्। उपतस्थे, 'उपाद् देवपूजासङ्गतिकरणमित्रकरणपथिष्विति वक्तव्यम्'[5] (वा०. १. ३. २५) इत्यात्मनेपदम्। शतमखेन सङ्गतोऽभूदित्यर्थः। चापस्य समीहितार्थसाधनक्षमतामभिद्योतयन् चापं विशिनष्टि— ललितयोषिद्भ्रूलताचारुशृङ्गमिति। ललितायाः सुन्दर्याः योषितः स्त्रियाः भ्रूलता प्रशस्ता भ्रूरिव चारु कोमलं शृङ्गम् अग्रं यस्य तत्तथा। अत्र ललितलताशब्दाभ्यामुपमानत्वसिद्धिरुक्ता। अनेन चापविशेषणेनास्मत्कार्यमसौ साधयिष्यत्येवेति शतमखस्य बुद्धिर्ध्वन्यते। तादृशचापाधिष्ठानयोग्यं कण्ठं विशिनष्टि— रतिवलयपदाङ्क इति। रतेरात्मवल्लभाया वलयपदं वलयस्थानमेवाङ्कश्चिह्नं यस्य तस्मिन्। कण्ठाश्लेषे वलयस्य चिरं कण्ठावसक्तत्वाद्[6] वलयप्रतिबिम्बलाञ्छितमित्यर्थः। अनेन गाढालिङ्गनं[7] ध्वनितम्। बाणानामप्यादानमाह— सहचरमधुहस्तन्यस्तचूताङ्कुरास्त्र इति। सहचरस्य त्रैलोक्यविजये सहायभूतस्य मधोर्वसन्तस्य 'मधुर्वसन्ते दैत्ये च मधु मद्ये च माक्षिक' इति भोजः। हस्ते न्यस्तः निक्षिप्तश्चूताङ्कुर एवास्त्रं येन स तथा। अनेन सहायसम्पत्तिः सहायस्य स्वाधीनता च दर्शिता ॥ ६३ ॥

---

१. 'वं द' ख. ङ. पाठः. २. 'क्तम्। य' ङ. पाठः. ३. 'त इ' ङ. पाठः. ४. 'मः' ख. ङ. पाठः. ५. 'वाच्यम्' घ. ङ. पाठः. ६. 'ण्ठास' ख. ग. घ. पाठः. ७. 'मप्युक्तम्' घ. ङ. पाठः.

द्वितीये सर्गेऽस्मिन् महति गहनार्थे मितपदे
निगूढानर्थान् को जगति विवरीतुं प्रभवति ।
तथाप्यस्माभिर्यत् प्रलपितमिति क्षीणमतिभि-
र्विलज्जैस्तत् सर्वं भवतु शिवयोः स्तोत्रविधये ॥

मीमांसोचित[1]मानमेयघटनादक्षस्य नारायण-
क्ष्मादेवस्य कृतौ गिरीशगिरिजाभक्तिप्रवृद्धोदये ।
व्याख्यानेऽत्र कुमारसम्भवपदार्थालोचनप्रक्रिया-
निष्णाते निरगाद् द्वितीय उदितः सर्गो निसर्गोज्ज्वलः ॥

इति श्रीकृष्णप्रियशिष्यस्य नारायणस्य कृतौ

कुमारसम्भवविवरणे

द्वितीयः सर्गः ।

---

१. 'दयमा' घ. ङ. पाठः.

# Ready for sale.

| | | | |
|---|---|---|---|
| भक्तिमञ्जरी (Stuti) by H. H. Svâti Srî Râma Varma Mahârâjah. | 1 | 0 | 0 |

## Trivandrum Sanskrit Series.

| | | | |
|---|---|---|---|
| No. 1 — दैवम् (Vyâkarana) by Deva with Purushakâra of Krishnalîlâsukamuni. | 1 | 0 | 0 |
| No. 2 — अभिनवकौस्तुभमाला – दक्षिणामूर्तिस्तवौ by Krishnalîlâsukamuni. | 0 | 2 | 0 |
| No. 3 — नलाभ्युदयः (Kâvya) by Vâmana Bhaṭṭa Bâṇa. | 0 | 4 | 0 |
| No. 4 — शिवलीलार्णवः (Kâvya) by Nîlakaṇṭha Dîkshita. | 2 | 0 | 0 |
| No. 5 — व्यक्तिविवेकः (Alankâra) by Mahima Bhaṭṭa with commentary. | 2 | 12 | 0 |
| No. 6 — दुर्घटवृत्तिः (Vyâkaraṇa) by Saraṇadeva. | 2 | 0 | 0 |
| No. 7 — ब्रह्मतत्त्वप्रकाशिका (Vedânta) by Sadâsivendra Sarasvatî. | 2 | 4 | 0 |
| No. 8 — प्रद्युम्नाभ्युदयम् (Nâtaka) by Ravi Varma Bhûpa. | 1 | 0 | 0 |
| No. 9 — विरूपाक्षपञ्चाशिका (Vedânta) by Virûpâkshanâtha with the commentary of Vidyâchakravartin. | 0 | 8 | 0 |
| No. 10 — मातङ्गलीला (Gajalakshaṇa) by Nîlakaṇṭha. | 0 | 8 | 0 |
| No. 11 — तपतीसंवरणम् (Nâtaka) by Kulasekhara Varma with the commentary of Sivarâma. | 2 | 4 | 0 |
| No. 12 — परमार्थसारम् (Vedânta) by Bhagavad Âdisesha with the commentary of Râghavânanda. | 0 | 8 | 0 |
| No. 13 — सुभद्राधनञ्जयम् (Nâtaka) by Kulasekhara Varma with the commentary of Sivarâma. | 2 | 0 | 0 |
| No. 14 — नीतिसारः (Nîti) by Kâmandaka, with the commentary of Sankarârya. | 3 | 8 | 0 |

No. 15 — स्वप्नवासवदत्तम् (Nâtaka) by Bhâsa. 2

No. 16—प्रतिज्ञायौगन्धरायणम् (Do.) Do. 1 8 0

No. 17—पञ्चरात्रम् (Do.) Do. 1 0 0

No. 18—नारायणीयम् (Stuti) by Nârâyaṇa Bhaṭṭa with the commentary of Desamangala Vârya. 4 0 0

No. 19—मानमेयोदय: (Mímâmsâ) by Nârâyaṇa Bhaṭṭa and Nârâyaṇa Paṇḍita. 1 4 0

No. 20—अविमारकम् (Nâtaka) by Bhâsa. 1 8 0

No. 21—बालचरितम् (Do.) Do. 1 0 0

No. 22—मध्यमव्यायोग-दूतवाक्य-दूतघटोत्कच-कर्णभारोरुभङ्गानि (Nâtaka) by Bhâsa 1 8 0

No. 23—नानार्थार्णवसंक्षेप: (Kosa) by Kesavaswâmin (1 & 2 Kâṇḍas) 1 12 0

No. 24—जानकीपरिणय: (Kâvya) by Chakrakavi. 1 0 0

No. 25—काणादसिद्धान्तचन्द्रिका (Nyâya) by Gangâdharasûri 0 12 0

No. 26—अभिषेकनाटकम् (Nâtaka) by Bhâsa 0 12 0

No. 27—कुमारसम्भव: (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinatha and Vivarana of Nârayanâ Pandita (1 & 2 Sargas) 1 12 0

***Apply to:—***

*The Agent for the sale of*

*Government Sanskrit Publications,*

*Trivandrum.*